श्रेष्ठि-देवचन्द-लालभाइ-जैनपुस्तकोद्धारे ग्रन्थाङ्कः ६०



सूरिशेखरयुगप्रधानश्रीजयचन्द्रसूरिपुरन्दर-
शिष्यश्रीमज्जिनहर्षगणिप्रवरनिर्मितः

# श्रीविचारामृतसारसंग्रहः

# [ विंशतिस्थानकचरितं. ]




प्रसिद्धिकारकः—अस्याः संस्थायाः कार्यवाहकः
शाह जीवनभाइ साकरचंद झव्हेरी.

वीर संवत् २४४९ विक्रम संवत् १९७९ मूल्यम् १-०-० क्राइष्ट सन् १९२३ प्रतयः ७५०

पालीताणा—श्री बहादुरसिंहजी प्री. प्रेसमां शा. अमरचंद बेहेचरदासे छाप्युं.

इति समासोऽनुक्रमः

प्रार्थना—प्रारब्धोऽयं मुद्रयितुं वटपद्रे लुहाणाख्यमुद्रणालये मुक्तस्तेनाष्टषष्टिं पत्राणां मुद्रयित्वा, पश्चादर्पितः सुरतीयजैनयन्त्राय, तेन तु पत्राष्टकमेव मुद्रितं, पश्चात् पादलिप्तस्थानगतबहादुरसिंहाख्ये यंत्रेऽर्पयित्वा समापित इति क्षन्तव्यं वर्णभेदे एकोनसप्तत्यष्टषष्ठयोः पृष्ठयोश्च पृष्ठव्यत्ययं इत्यर्थयते आनन्दः



# श्रेष्ठी देवचंद लालभाई जह्वेरी·

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
| कार्तिकशुक्लैकादश्यां, सूर्यपूरे | पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

## The Late Sheth Devchand Lalbhai Javeri.

Born 1853 A D Sura      Died 13th January 1906 A D Bombay,

10000-1-21

सम्यग्-भावेन भजते फलम् । स्वाद: प्रादुर्भवेद्भोज्ये, किं नाम लवणं विना ? ॥ ९ ॥ भूयांस्यपि तपांसि स्यु, प्रसिद्धानि जिनागमे । परं श्रीविंशतिस्थान-तपस्तुल्यं तपो न हि ॥ १० ॥ यत.—×वीसाए अन्नयरं, ठाणमणाराहिऊण णो जीवो । अरिहाईणं मज्झे, जिणिंदपदमुत्तमं लहइ ॥ ११ ॥ अरिहंत १ सिद्ध २ पवयण ३ गुरु ४ थेरे ५ बहुसुए ६ तवस्सीसु ७ । वच्छलया एएसिं, अभिक्खनाणोवओगे अ ८ ॥ १२ ॥ दंसण ९ विणए १० आव-स्सए य १० सीलवए निरइयारे ११ । खणलव १२ तव १३ च्चियाए १४, वेयावच्चे १५ समाहीए १६ ॥ १३ ॥ अप्पुव्वनाणगहणे-१८, सुयभत्ती १९ पवयणे पभावणया २० । एएहिं कारणेहिं, तित्थयरत्त लहइ जीवो ॥ १४ ॥ पुरिमेण पच्छिमेण य, एए सव्वेवि फासिया ठाणा । मज्झिमएहि जिणेहिं, एग दो तिन्नि सव्वे वा ॥ १५ ॥ इति २० स्थानकानि । ततो भव्योपकाराय, स्वार्थसंपत्समीहया । दर्शितस्पष्टदृष्टान्तं, तत्स्वरूपं निरूप्यते ॥ १६ ॥

इह हि द्विविधार्हद्धर्ममूलरूपस्य श्रीसम्यक्त्वस्य विशुद्ध्यै एतानि विंशतिस्थानकानि विवेकिना साधुना श्रावकेणापि च सर्वदा सम्यगाराधनीयानि, सम्यग्दर्शनविशुद्धिपूर्वकमेव सर्वं सदनुष्ठान परमार्थफलोदयाय जायते· यत —

---

× विंशतावन्यतरत्स्थानमनाराध्य न जीवोऽर्हदादीना मध्ये, जिनेन्द्रपदमुत्तम लभते ॥ ११ ॥ अर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विषु । वत्सलतया एतेषा अभीक्ष्णज्ञानोपयोगौ च ॥ १२ ॥ दर्शनविनयौ आवश्यके शीलव्रते निरतिचार । क्षणलव तपस्त्यागे वैयावृत्त्ये समाधौ ॥ १३ ॥ अपूर्वज्ञानग्रहणे श्रुतभक्तौ प्रवचने प्रभावनता । एतै कारणैस्तीर्थकरत्व लभते जीव ॥ १४ ॥ पूर्वेण पश्चिमेन चैतानि सर्वाणि स्पृष्टानि स्थानानि । मध्यमैर्जिनै एक द्वे त्रीणि सर्वाणि वा ॥ १५ ॥

* संपुण्णफलं देइअ, जिणिंदमग्गंमि देसिया किरिया । सम्मत्तनाणसहिया, इयरा अन्नाणकट्ठसमा ॥ १७ ॥ तद्यथा— दानानि शीलानि तपांसि पूजा, सत्तीर्थयात्रा प्रवरा दया च । सुश्रावकत्वं व्रतधारकत्वं, सम्यक्त्वमूलानि महाफलानि ॥ १८ ॥ तत्र सर्वेष्वपि स्थानकेषु श्रीसम्यग्दर्शननैर्मल्यकारिणी श्रीजिनपूजा त्रिकालं विधेया, यतः— ×जो पूएइ तिसंझे, जिणिंदरायं तहा विगयदोसं । सो तइयभवे सिज्झइ, अहवा सत्तट्ठमे जम्मे ॥ १९ ॥ जिणपूअणं तिसंझं, कुणमाणो सोहए य सम्मत्तं । तित्थयरनामगुत्तं, पावइ सेणियनरिंदव्व ॥ २० ॥ तद्यथा—एकशोऽष्टप्रकारा विधेया जिनार्चा, पंचशक्रस्तवैश्च देवा वन्दनीयाः, तत्र द्रव्यभावाभ्यां द्विविधा जिनपूजा, सद्यस्कसुरभिपुष्पादिभिर्यदुत्तमद्रव्यैर्जिनार्चा सा द्रव्यपूजा, सम्यगाज्ञापालनं भावपूजा, यतः— ‡दुविहा जिणिंदपूआ, दव्वे भावे य तत्थ दव्वंमि । दव्वेहिं जिणपूआ, जिणआणापालणं भावे ॥ २१ ॥ अहवा उ भावपूआ,

---

* संपूर्णफलं ददाति जिनेन्द्रमार्गे देशिता क्रिया । सम्यक्त्वज्ञानसहिता इतरा अज्ञानकष्टसमा ॥ १७ ॥

× यः पूजयति त्रिसन्ध्यं जिनेन्द्रराजं तथा विगतदोषम् । स तृतीयभवे सिध्यति, अथवा सप्ताष्टमे जन्मनि ॥ १९ ॥ जिनपूजनं त्रिसन्ध्यं, कुर्वन् शोधयति च सम्यक्त्वम् । तीर्थकरनामगोत्रं, प्राप्नोति श्रेणिकनरेन्द्र इव ॥ २१ ॥

‡ द्विविधा जिनेन्द्रपूजा द्रव्ये भावे च तत्र द्रव्ये । द्रव्यैर्जिनपूजा, जिनाज्ञापालनं भावे ॥२१॥ अथवा तु भावपूजा स्थित्वा चैत्यवन्दनोचिते स्थाने । यथाशक्ति चित्रस्तुतिस्तोत्रादिना देववन्दनम् ॥ २२ ॥ उत्कृष्टं द्रव्यस्तवमाराध्य यात्यच्युतं यावत् । भावस्तवेन प्राप्नोत्यन्तर्मुहूर्त्तेन निर्वाणम् ॥ २३ ॥

ठाउं चिइवंदणोचिए ठाणे । जहसत्ति चित्तथुइथुत्त-माइणा देववंदणयं ॥ २२ ॥ उक्कोसं दव्वथयं, आराहिअ जाइ अच्चुअं जाव । भावत्थएण पावइ, अंतमुहुत्तेण निव्वाणं ॥ २३ ॥ अथवा त्रिविधा पञ्चविधाऽष्टविधा वा जिनपूजा. यत.— † विग्घो-वसामिगेगा, अब्भुदअसाहिणी भवे बीया । निव्वुइकरणी तइया, अंगग्गयभावओ तिहा पूआ ॥ २४ ॥ पंचोवयारजुत्ता, पूआ अट्ठोवयारकलिया य । रिद्धिविसेसेण पुणो, नेया सव्वोवयारा वा ॥ २५ ॥ वरकुसुमावलिअक्खय-चंदणदवधूवपवरदीवेहिं । पंचोवयारपूआ, कायव्वा वीयरागाणं ॥ २६ ॥ कुसुमक्खयगंधपईव-धूवनेवेज्जफलजलेहिं पुणो । अट्ठविहकम्ममहणी, जिणपूआ अट्ठहा भणिया ॥ २७ ॥ सव्वोवयारपूआ, न्हवणच्चणवत्थभूसणाईहिं । फलबलिदीवाइनट्टगीयआरत्तियाईहिं ॥ २८ ॥ निच्चं चिय संपुण्णा, जइवि हु एसा न तीरए काउं। तहवि अणुचिट्ठियव्वा, अक्खयदीवाइदाणेणं ॥२९॥ (श्रीहरिभद्रसूरिकृत) पंचवस्तुके,

स्नानं विलेपनविभूषणपुष्पवास-धूपप्रदीपफलतण्डुलपत्रपूगैः । नैवेद्यवारिवसनं चमरातपत्र-वादित्रगीतनटनस्तुतिकोपवृद्धिः ॥ ३० ॥ इत्येकविंशतिविधा जिनराजपूजा, ख्याता सुरासुरगणेन कृता सदैव । खण्डीकृता कुमतिभिः कलिकालयोगा-द्यद्यः त्प्रियं तदिह भाववशेन योज्यम् ॥ ३१ ॥

---

† विघ्नोपशमिकैका अभ्युदयसाधनी भवेद् द्वितीया । निर्वृतिकरणी तृतीया अङ्गाग्रभावतस्त्रिधा पूजा ॥२४॥ पञ्चोपचारयुक्ता, पूजाऽष्टोपचारकलिता च । ऋद्धिविशेषेण पुनर्ज्ञेया सर्वोपचारा वा ॥२५॥ वरकुसुमावल्यक्षतचन्दनद्रवधूपप्रवरदीपैः । पञ्चोपचारपूजा कर्तव्या वीतरागाणाम् ॥ २६ ॥ कुसुमाक्षतगन्धप्रदीपधूपनैवेद्यफलजलैः पुनः । अष्टविधकर्ममथनी, जिनपूजाऽष्टधा भणिता ॥ २७ ॥ सर्वोपचारपूजा स्नपनार्चनवस्त्रभूषणादिभिः । फलबलिदीपादिनृत्यगीतारात्रिकादिभिः ॥२८॥ नित्यमेव संपूर्णा यद्यपि चैषा न शक्यते कर्तुं । तथाप्यनुष्ठातव्या अक्षतदीपादिदानेन ॥२९॥

अथ पूजाविधिः—विमुच्य निद्रां चरमे त्रियामा-यामार्द्धभागे शुचिमानसेन । दुष्कर्मरक्षोदलनैकदक्षो, ध्येयस्त्रिधा श्रीपरमेष्ठिमन्त्रः ॥ ३२ ॥ ततो विशुद्धो विधिवद्गृहीत-सामायिकः साम्यसुधाप्रशान्तः । निशातमश्छेदनिशातशस्त्रं, कुर्यात्प्रतिक्रान्तिविधिं विधिज्ञः ॥ ३३ ॥ विलोक्य वामेतरपाणिरेखां, संयोज्य हस्तौ रचयन् स्वभाले । वदन्नदम्भामिति गां जिनाय, नमोऽस्तु सर्वत्र सुखी जनोऽस्तु ॥ ३४ ॥ विज्ञातनिर्दोषतरोरदीर्घ-तुच्छानतिस्थूलकुशेन मौनी । शुद्धासिरद्भिर्द्विजशोधनेन, कुर्याद्रसज्ञादशनादिशुद्धिम् ॥३५॥ स्नानीयपानीयमयोपनीय, निवेदितः कालविदा जनेन । स्नानार्हवासो विशदं वसीत, निःशीतवातातपसाददेशे ॥ ३६ ॥ नीरन्ध्रनिर्जन्तुविशुद्धभूमि-विभूषणोच्चासनसंनिविष्टः । जातोद्यमोऽभ्यङ्गनमर्दनाभ्यां, स्नायादनायासमना हि मौनी ॥३७॥ अखण्डदुग्धोदकधौतवस्त्र-युग्मं पवित्रं सुदृढं वसीत । श्रीचन्दनालङ्कृतभालपाणिः, शुचिः सुधीरर्चति वीतरागम् ॥ ३८ ॥ तथा—विशुद्धिं वपुषः कृत्वा, यथायोग्यं सुवारिभिः । धौतवस्त्रे वसीत द्वे, विशुद्धे धूप-धूपिते ॥ ३९ ॥ मनोवाक्कायवस्त्रोर्वी-पूजोपकरणस्थितेः । शुद्धिः सप्तविधा कार्या, श्रीअर्हत्पूजनक्षणे ॥४०॥ यतः—* काऊण विहिणा ण्हाणं, सेयवत्थनिअंसणो । मुहकोसं तु काऊणं, गिहिबिंबाणि पमज्जए ॥ ४१ ॥ गंधोदएण ण्हावित्ता, जिणे तेलुक्कबंधवे । गोसीसचंदणाईहिं, विलिंपित्ता य पूअए ॥ ४२ ॥ त्यक्तक्रोधादिविकृतिः, पापव्यापारवर्जितः । एकाग्रहृदयो भूत्वा, जिनेन्द्रं पूजयेच्छुचिः ॥ ४३ ॥ पनपूगफलवारिमञ्जुला-खण्डतण्डुलनिवेद्यढौकनम् । धूपधूपनमवामचालना-ऽऽरात्रिकस्य सह

* कृत्वा विधिना स्नानं परिहितश्वेतवस्त्रः । मुखकोशं तु कृत्वा, गृहबिम्बानि प्रमार्जयेत् ॥ ४१ ॥ गन्धोदकेन स्नपयित्वा जिनान् त्रैलोक्यबान्धवान् । गोशीर्षचन्दनादिभिर्विलिप्य च पूजयेत् ॥ ४२ ॥

मङ्गलार्चिषा ॥ ४४ ॥ एष पूजनविधिक्रमो जिने, तेन पुण्यमनसा विधीयते । विस्तरेण पुनरस्ति यो विधि–र्जायते च स विशेषपर्वसु ॥ ४६ ॥ तथा—भास्वत्प्रकाशिते वस्तु–जाते जन्तुकृपावृते । अर्हन्तं पूजयेत्प्रातः, शुचिर्द्विघटिकावधि ॥४७॥ तथा—प्रातः शुचीभूय सुधौतवासा, निर्माल्यमुत्तार्य विशुद्धभूमौ । संस्थाप्य तन्निर्मलपट्टपीठे, निधाय बिम्बं विधिना जिनस्य ॥ ४८ ॥ पुष्पगान्धविशुद्धाम्बु–पूरैः पुण्यतरैः पुनः । अभिषिञ्चति पूतात्मा, सूत्रपाठपुरस्सरम् ॥ ४९ ॥ सुगमम् । पाठश्चायं—

× बालत्तणंमि सामी, सुमेरुसिहरंमि कणयकलसेहिं । तियसासुरेहि ण्हविओ, ते धन्ना जेहि दिट्ठोसि ॥ ५० ॥ तथा च—

चक्रे देवेन्द्रराजैः सुरगिरिशिखरे योऽभिषेकः पयोभि–र्नृत्यन्तीभिः सुरीभिर्ललितपदगतैस्तूर्यनादैस्तु दीप्तैः । कर्तुं तस्यानुकारं शिवसुखजनकं मन्त्रपूतैः सुकुम्भै–र्बिम्बं जैनं प्रशान्तं विधिवचनपरः स्नापयाम्यत्र काले ॥ ४९ ॥ युक्तिशक्त्यादिसद्भावे, दुग्ध-दध्यादिभिः सुधीः । अभिषेकं जगद्भर्तुः, कुर्यात्सर्वार्तिशान्तये ॥ ५० ॥ यतः— ‡खीरेण जोऽभिसेअं, कुणइ जिणिंदस्स भत्तिराएणं । गोखीरधवलविमले, रमइ विमाणे चिरं कालं ॥ ५१ ॥ दहिकुंभेहि जिणंदं, जो सिंचइ होइ सुरविमाणेसुं । उप्पज्जइ लच्छिधरो, देवो दिव्वेण रूवेणं ॥ ५२ ॥ इत्तो घयाभिसेअं, जो कुणइ जिणेसरस्स पययमणो । सो होइ सुरहि-

---

× बाल्त्वे स्वामिन् सुमेरुशिखरे कनककलशैः । त्रिदशासुरैः स्नापितस्ते धन्या यैर्दृष्टोऽसि ॥ ५० ॥

‡ क्षीरेण योऽभिषेकं करोति जिनेन्द्रस्य भक्तिरागेण । गोक्षीरधवलविमले, रमते विमाने चिरं कालम् ॥ ५१ ॥

दधिकुम्भैर्जिनेन्द्रं योऽभिषिञ्चति भवति सुरविमानेषु । उत्पद्यते लक्ष्मीधरो, दिव्यो दिव्येन रूपेण ॥ ५२ ॥

अतो घृताभिषेकं यः करोति जिनेश्वरस्य प्रयतमनाः । स भवति सुरभिदेहः सुरप्रवरो वरविमाने ॥ ५३ ॥

देहो, सुरपवरो वरविमाणंमि ॥ ५३ ॥ वस्त्रेणातिपवित्रेण, मृदुना च सुगन्धिना । सावधानतया जैनं, बिम्बं कुर्याद्गतोदकम्
॥ ५४ ॥ कर्पूरकेसरोन्मिश्र-श्रीखण्डेन ततोऽर्चनाम् । कुर्वन् जिनेशितुर्भाले, कुर्वीत तिलकं धुरि ॥ ५५ ॥ नवाङ्गे तिलकैः
कार्या, ततः पूजा जगत्पतेः । अंह्रिजानुकरांसेषु, शीर्षे श्रीखण्डयोगतः ॥ ५६ ॥ पश्चादालिपयेदङ्गं, घुसृणैर्मसृणैर्विभोः । कण्ठे
हृदि न्यसेच्छीर्षे, ततः स कुसुमस्रजः ॥ ५७ ॥ मुकुलैः कुसुमैः सृष्ट्या, विस्फुरद्भूरिसौरभैः । वस्त्रावृतमुखाम्भोजः, पूजयेच्छ्री-
जिनं ततः ॥ ५८ ॥ पञ्चवर्णैस्ततः पुष्पै-र्यथास्थाननियोजितैः । अर्चनां रचनायोगाद्रचयेद्बुधिदां नृणाम् ॥ ५९ ॥ यतः—
न शुष्कैः पूजयेद्देवं, कुसुमैर्न महीगतैः । न विशीर्णदलैः स्पृष्टै-र्नाशुभैर्नाविकाशिभिः ॥ ६० ॥ कीटकेनापविद्धानि, शीर्णपर्यु-
षितानि च । वर्जयेदूर्णनाभेन, वासितं यदशोभनम् ॥ ६१ ॥ पूतिगन्धीन्यगन्धीनि, आम्लगन्धीनि वर्जयेत् । मलमूत्रादि-
निर्माणा-दुत्सृष्टानि कृतानि च ॥ ६२ ॥ ग्रन्थिमादिचतुर्भेदैः, पुष्पैः सद्यस्कसौरभैः । निजान्यहृदयानन्द-दायिनीं कुरुतेऽर्चनाम्
॥ ६३ ॥ ततोऽर्चयेज्जिनाधीशं, नालिकेरादिभिः फलैः । प्रियंकरैरशीर्णाङ्गै-र्नागवल्लीदलैस्तथा ॥ ६४ ॥ अक्षतै रक्षितुर्विश्वं,
॥ ६५ ॥ राजतैस्तण्डुलैरग्रे, रचयेदष्टमङ्गलीम् । दर्पणादिसदाकारै-
पुरः पुञ्जत्रयं सृजेत् । ज्ञानदर्शनचारित्र-शुद्धये शशिनिर्मलैः ॥ ६५ ॥ राजतैस्तण्डुलैरग्रे, रचयेदष्टमङ्गलीम् । दर्पणादिसदाकारै-
र्मङ्गलार्थं दिने दिने ॥ ६६ ॥ यतः— †दप्पण १ भद्दासण २ वद्ध-माण ३ सिरिवच्छ ४ मच्छ ५ वरकलसा ६ । सच्छिय
७ नंदावत्ता ८, लिहिया अट्ठट्ठ मंगलया ॥ ६७ ॥ वासधूपप्रदीपादि-पूजां कृत्वा ततः पुनः । नैवेद्यं दर्शयेत्पूतं, वारिपात्रपुर-



† दर्पणं भद्रासनं वर्धमानं श्रीवत्समत्स्यवरकलशाः । स्वस्तिकनन्दावर्त्तौ लिखितान्यष्टाष्ट मङ्गलकानि ॥ ६७ ॥

रसरम् ॥ ६८ ॥ यत.—इह होइ असणपूआ, वरखज्जगमोअगाइभक्खेहिं । दुद्धदहीघयाईणं ( हिघयाइ ) भायणेहिं तह ओ-अणाईहिं ॥ ६९ ॥ साइमपूआइ पुणो, नेयं पूगफलपत्तगुलपमुहं । पंचंगुलिलिहणाइं, पुप्फपगराइदीवेहिं ॥ ७० ॥ गंधव्वन-ट्टवाईय–लवणजलारत्तिआइदीवेहिं । जं किज्जइ तं सव्वं, अवयरई अग्गपूआए ॥ ७१ ॥ ततः सुश्रावकः कुर्वन्, लवणाम्बु-विधिक्रमम् । कुर्वीतारात्रिकं पूजा–पूर्वं मङ्गलदीपकम् ॥ ७२ ॥ नैषेधिकीविधानेन, भावपूजाविधित्सया । प्रमार्ज्योर्वीं प्रतिक्रम्ये-र्यापथिकीं समाधिमान् ॥ ७३ ॥ मुद्रात्रिकादिविधिना, द्वादशाधिकृतिस्थिते. ।*पञ्चाङ्गप्रणिपातेन, वन्दित्वा वन्दतेऽर्हतः ॥७४॥ प्रत्यहं समनुष्ठेयो, देवपूजाविधिः सताम् । स्नात्रोत्सवविधिं किञ्चित्, संक्षेपादुच्यतेऽधुना ॥ ७५ ॥ तत्र—धौतवासाः सदाचार, सालङ्कारः सुधी. शुचिः । पुरो विधाय बिम्बस्य, कलशं जलसम्भृतम् ॥ ७६ ॥ निर्माल्यकरणं सूत्र–पाठपूर्वं जगद्गुरोः । कुरुते श्रावकः शुद्धो, धूपोत्क्षेपपुरस्सरम् ॥ ७७ ॥ युग्मम् । किं लोकनाथ । भवतोऽतिमहार्घतैषा, किंवा स्वकार्यकुशलत्वमिदं जनानाम् । किंवाद्भुतं सुमनसां गुण एष कश्चि–दुष्णीषदेशमधिरुह्य विभाति येन ॥७८॥ प्रतिमोष्णीषभागे तु, कुसुमारोपणं व्यधुः । पद्येनानेन वन्दारु–लोकानां श्रेयसे किल ॥ ७९ ॥ तत पुष्पाञ्जलीः पञ्च, सप्त वा श्रीजिनेशितुः । विधिनाग्रे विधायोच्चै-स्तूर्यध्वानमनोहरम् ॥८०॥ जन्माभिषेकं जैनेन्द्रं, गन्धर्वश्रुतिबन्धुरम् । पठति श्रावकः श्रीमान्, सुधासोदरया गिरा ॥८१॥ युग्मम् ॥

स्वर्णरूप्यकलशाङ्कितहस्ता, हस्तिराजपतिसन्निभशोभाः । श्रावका. सकललोकविलोक्यस्तोकभूषणभृतो गुणवन्त ॥८२॥

---

§ इह भवत्यशनपूजा वरखाद्यमोदकादिभक्ष्यै । दुग्धदधिघृतादिभाजनैस्तथौदनादिभि ॥६९॥ स्वाद्यपूजाया पुनर्नेयं पूगफलपत्रगुडप्रमुखम् । पञ्चाङ्गुलिलेहनादि पुष्पप्रकरादिदीपै । ॥ ७० ॥ गान्धर्वनाट्यवादित्रलवणजलारात्रिकादिदीपै । यत्क्रियते तत्सर्वं अवतरति अग्रपूजायाम् ॥ ७१ ॥

आनन्दमेदुरहृदः कलशादिपाठं, सद्धूपधूमलहरीसुरभीकृताशाः। मिथ्यादृशामपि सृजन्ति जिनेन्द्रधर्म–स्थैर्यं गभीरवचसा रचयन्त उर्व्याम् ॥८३॥ युग्मम्। नृत्यन्नारीसहस्रं चलचमरयुगं वादितानेकवाद्यं, व्याक्षिप्ताशेषलोकं सकलसुरगणं कुर्वदानन्दपात्रम्। स्नात्रं त्रैलोक्यनेतुर्दुरितशतहृतिः श्राद्धलोकः क्रमेण, कुर्याद्देवेन्द्ररीत्या जिनमतगुरुतां दर्शयन् वारिपूरैः ॥ ८४ ॥ अभिषेकतोयधारा, धारेव ध्यानमण्डलाग्रस्य । भवभवनभित्तिभागान्, भूयोऽपि भिनत्तु भागवती ॥ ८५ ॥ एतद्वृत्तं पठन्तोऽथ, श्रावकाः शुद्धवारिणा। सन्तापशान्तये धारां, जैनबिम्बोपरि व्यधुः ॥ ८६ ॥ गन्धकाषयिकाख्येन, सिचयेन जिनेश्वरम्। रत्नादर्शमिवोन्मृज्य, व्यधुरुज्ज्वलमार्हताः ॥ ८७ ॥ ततः पूजां यथोद्दिष्टां, श्रीखण्डकुसुमादिभिः । रचयन्त्यद्भुतां भक्त्या, यथायोगं जिनेशितुः ॥ ८८ ॥ विधिं विधाय निःशेषं, सम्यक् लवणवारिभिः । चन्दनस्वस्तिकं कृत्वा, रत्नस्थालोपरिस्थितम् ॥ ८९ ॥ अभ्यर्च्य चन्दनैः पुष्पैः, प्रणम्य च जगत्पतिम् । विधिनोत्तारयत्युच्चै–र्दीपमारात्रिकं सुधीः ॥ ९० ॥ मङ्गलोपपदं दीपं, गजेन्द्रारूढमुज्ज्वलम् । विधत्ते विधिना धीमान्, चर्चितं चन्दनादिभिः ॥ ९१ ॥ यतः त्रिषष्टीयश्रीआदिचरित्रे–प्रमोदतः सुरगणैः, प्रकीर्णकुसुमोत्करम् । भर्तुरुत्तारयामास, तत्रिस्त्रिदशपुंगवः ॥ ९२ ॥ श्रेयोदीपं प्रदीपं तं, निवेश्य श्रीजिनाग्रतः । भावपूजाकृते श्राद्धः, कुरुते चैत्यवन्दनाम् ॥ ९३ ॥ इति स्नात्रम् ॥

अथाद्यस्थानकं कुर्वन्नर्हद्भक्तिचिकीर्षया । विशेषात् कुरुते सम्यग्दृष्टिः पूजां द्विधार्हताम् ॥ ९४ ॥ पदस्थध्यानशुद्धात्मा, परमेष्ठिनमस्कृतेः । अष्टोत्तरसहस्रं, तु, जपेदाद्यपदं सुधीः ॥ ९५ ॥ यद्वा पठन् शुचिमनाः परमेष्ठिमन्त्रं, सम्प्रपत्पदाक्षरलयोत्तमसाम्यशीतः । श्रीखण्डपुष्पवरतण्डुलपूजनेन, भक्तिं महोदयपदं कुरुते जिनस्य ॥ ९६ ॥ इत्यर्हत्प्रतिमाया यः, षण्मासीं भक्तिमद्भुताम् ।-

वितनोति शुचिं तस्य, सम्पदः स्युर्मनीषिताः ॥ ९७ ॥ ऐहिकाशुफलप्राप्त्यै, फलेनाभ्यर्च्य भक्तितः । श्रीखण्डाक्षतसत्पुष्पैर्मन्त्रजापपुरस्सरम् ॥ ९७ ॥ शुभाज्यदीपमुद्योत्य, पूजयेज्जगतः पतिम् । मुद्रादिविधिना सम्यक्, वन्दते स्तौति चादृतः ॥ ९८ ॥ तथा-पुष्पप्रदीपाक्षतधूपपूगीफलैर्जिनेन्द्रप्रतिमां प्रपूज्य । ये लक्षशः श्रीपरमेष्ठिमन्त्रं, जपन्ति ते तीर्थकृतो भवन्ति ॥ ९९ ॥ तथा-शाश्वताशाश्वतान्यर्हद्बिम्बानि त्रिजगत्यपि । प्रणिधाय नमस्कुर्या-चैत्यवन्दनपूर्वकम् ॥ ९८ ॥ चन्द्रप्रभपुष्पदन्तौ, शुक्लध्यानसमाधिमान् । ध्यायेदर्हद्गुणस्मृत्या, श्वेतद्युतिसमन्वितौ ॥ ९८ ॥ जन्तूंश्चतुर्गतिक्लेशावेशात्त्रातुमिवोत्थितान् । नामाकृतिद्रव्यभावै-श्चतुर्धा श्रीमदर्हतः ॥ ९९ ॥ यो नमस्कुरुते भक्त्या, त्रिसन्ध्यं पूजयत्यपि । उपास्ते ध्यायति स्तौति, सद्भुतगुणकीर्त्तनैः ॥ १०० ॥ युग्मं। स्नात्रं विलेपनं पूजामष्टधा दिव्यवस्तुभिः। कुर्यात्तेषां महर्घ्यालङ्कारैर्वस्त्रैश्च पूजनम् ॥ १ ॥ आगमोक्तेन विधिना, निर्मिमीते नमस्क्रियाम् । तत्कचैत्यानि नव्यानि, नव्या मूर्त्तीश्च कारयेत् ॥२॥ इक्षोः खण्डं रसं पाकं, गुडं खण्डां सितोपलाम् । यथा स्वादयतः पुंसः, सुखं स्यादधिकाधिकम् ॥ ३ ॥ तथा श्रद्धादिरूपेण, स्वान्तानन्देन भावितः । नमस्करोति यो जैनमूर्तिं शक्रस्तवादिभिः ॥ ४ ॥ देवपाल इवासाद्य, स राज्यं स्वःसुखान्वितम् । तीर्थकृत्पदवीं प्राप्तो, मोदते मुक्तिसम्पदा ॥ ५ ॥ त्रिभिर्विशेषकम् ।

तथाहि—अत्रैव भरतक्षेत्रे, खण्डेन्द्राकारधारिणि । षट्खण्डवसुधाधीशकीर्त्तिकर्पूरवासिते ॥५॥ सनन्दकश्रियोपेतं, कमलापतिपाणिवत् । अस्ति स्म स्वस्तिकाकारं, भुवोऽचलपुरं पुरम् ॥ ६ ॥ राजा सिंहरथो नाम, धाम तत्राद्भुतश्रियः । आसीद्दासीकृताराति-रनतिक्रमविक्रमः ॥७॥ प्रिया कनकमालेति, ख्याताभूच्छीललीलया । तस्य विश्वत्रयस्त्रैणगुणसौन्दर्यजित्वरी ॥ ८ ॥ दिव्यो-

पयाचितशतैरासीद्विश्वैकविश्रुता । मनोरमा रमाकारा, तयोः पुत्री पवित्रधीः ॥ ९ ॥ अथात्रैव पुरे श्रेष्ठी, जिनदत्तः सतां मतः । राज्यमान्योऽभवद् भूयोधनेन धनदोपमः ॥ १० ॥ सम्यग्दृष्टिशिरोरत्नमुपकारपरम्पराम् । यः कुर्वन् पौरवर्गस्य, विरराम न हि क्वचित् ॥ ११ ॥ तद्गृहे देवपालोऽभूद्, भूपालान्वयसंभवः । कृपालुः सर्वजीवेषु, धर्मपुत्रोऽप्यतिप्रियः ॥ १२ ॥ विज्ञातजिनधर्मोऽसौ, सुसाधुगुरुसङ्गमात् । गोकुलं श्रेष्ठिनस्तस्य, पालयत्यनुवासरम् ॥ १३ ॥ वर्षाकालेऽन्यदा वारिप्लाविते सरितस्तटे । स युगादिजिनाधीशमूर्त्तिमैक्षिष्ट निर्मलाम् ॥ १४ ॥ चिन्तामणिमिवालोक्य, तामसौ मुदिताशयः । सुकृती कृतवानेवं, विमर्शं निजमानसे ॥ १५ ॥ अहो पुण्योदयः कोऽपि, प्रादुरासीन्ममाधुना । यदियं त्रिजगद्भर्त्तु–र्मूर्त्तिर्दृग्पथमागमत् ॥ १६ ॥ भङ्गुरेतरभाग्यानि, न विना दर्शनं निजम्। देवो दत्ते परोऽप्येष, विशेषात्त्रिजगत्पतिः ॥ १७ ॥ पवित्रे तदसौ स्थाने, क्वापि स्थाप्या मयाधुना । स्थापयन्नर्हतो मूर्त्तिं, जगत्पूज्यो भवेद्यतः ॥ १८ ॥ ततस्तृणमयं वेश्म, निवेशमिव सम्पदः । कृत्वा तत्र सरित्तीरे, स तां पीठोपरि व्यधात् ॥ १९ ॥ यावज्जीवमिमां मूर्त्तिमर्हतो गर्हितापहाम् । पूजयित्वा नमस्कृत्य, मया भोक्तव्यमन्वहम् ॥ २० ॥ सर्वेषु सविशेषं तु, चतुर्दश्यादिपर्वसु । इत्युग्रभाववान् देवपालोऽभिग्रहमग्रहीत् ॥ २० ॥ युग्मम् । ततोऽसौ चारयन्नित्यं, सुरभीः सुरतिस्थितिः । अर्चत्यादिजिनाधीशप्रतिमां कुसुमादिभिः ॥ २१ ॥ पयसैकार्णवीभावं, लम्भिते मण्डले भुवः । निरन्तरमहावृष्ट्या, सप्तरात्रं पयोमुचः ॥ २२ ॥ तदर्चनकृते गन्तुं, तेनाशक्नुवता बहिः । अभिग्रहवता सप्तोपवासाः खलु निर्मिताः ॥ २३ ॥ युग्मम् । सप्ताहं संततं जैनपूजाध्यानवशाशयः । क्षपणैः क्षपयामास, क्लिष्टकर्मावलीमसौ ॥ २४ ॥ निवृत्तायां ततो वृष्टौ, कृशीभूते पयःप्लवे । अष्टमेऽह्नि जिनेन्द्रस्य, पूजार्थं स ययौ प्रगे ॥ २५ ॥ तां मूर्त्तिं

भक्तितोऽभ्यर्च्य, देवपालो जिनेशितुः । भक्तिमुग्धो विशुद्धात्मा, कृताञ्जलिर्व्यजिज्ञपत् ॥ २६ ॥ क्षमस्व त्वं क्षमाधार, कृपागार जगत्प्रभो ! । सप्ताहं यदपूज्योऽभूर्मन्दभाग्यतया मम ॥ २७ ॥ त्वद्दर्शनं विना स्वामिन् ! ममामूःसप्तवासरी । अकृतार्था यथारण्यभूमीरुहफलावलिः ॥ २८ ॥ श्लाघ्योऽयं दिवसो नेतः !, शस्योऽयं समयस्तथा । यत्त्वं नेत्रातिथिर्जातो, ममाद्य जगदीश्वर ! ॥ २९ ॥ तद्भाग्यमपि भूयोभिर्भाग्यैरेवोपलभ्यते । येन त्वं दृश्यसे देव !, रोवधिः शिवशर्मणः ॥ ३० ॥ इत्सर्हद्भक्तिविज्ञप्तिरसावेशवशंवदम् । तमवक् देवता काचित्, भीता प्रत्यक्षतां गता ॥ ३१ ॥ बिम्बाधिष्ठायिका देवी, त्वदीयाद्भुतभक्तितः । सन्तुष्टाऽहं महाभाग !, मनोऽभीष्टं वरं वृणु ॥ ३२ ॥ तेनापि तत्पुरैश्वर्यसम्पदो मुग्धचेतसा । मार्थिता यज्जनः माय, ऐहिकं फलमीहते ॥ ३३ ॥ दिनैः कतिपयैर्वत्स !, राज्यं तव भविष्यति । भावपूजा जिनेन्द्रस्य, भक्तकामगवी यतः ॥ ३३ ॥ इत्युदीर्य तिरोजज्ञे, तत्क्षणाद्देवता पुनः । आससाद मुदं देवपालोऽपि जगदद्भुताम् ॥ ३४ ॥ तत्पश्चात्प्रणामेन, रजस्तिलकितां निजाम् । भालस्थलीमसौ तन्वन्, भोजानायागमद् गृहम् ॥ ३५ ॥ ततोऽसौ परमान्नेन, श्रेष्ठिनिर्मितगौरवम् । पारणं निर्ममे पात्रदानं निर्माय निर्निभम् ॥ ३६ ॥ तस्मिन्नवसरे तत्र, दमसारमहामुनेः । उत्पन्नं केवलज्ञानं, शुक्लध्यानानुभावतः ॥ ३८ ॥ आसन्नदिग्देशश्चक्रे, ततस्तन्महिमा महान् । तत्कृतं कनकाम्भोज–मलञ्चक्रे स सर्ववित् ॥ ३९ ॥ नृपः सिंहरथः सान्तःपुरः पौरपरिवृतः । केवलज्ञानिनं नन्तुं, तत्रागान्मुदितस्तदा ॥ ४० ॥ उपाविशद्दिशामीशस्तस्याग्रे नतिपूर्वकम् । विदधे च तदा धर्मदेशनां केवली मुनिः ॥ ४१ ॥ शिवपदमुखाभिलाषो, निर्वेदो भवसुखेषु वीर्मिष्याम् । जगदुपकारे चित्तं, लक्षणमासन्नमोक्षस्य ॥ ४२ ॥ येन प्रभुस्वजनवैभवदेहगेहे, चिन्तातुरेण सुकृतं न कृतं कदाचित् । वेत्राहिकत्यतिकराकुलितस्य तस्य, नो पाणिपी-

डनविधिः स्मृतिमाजगाम ॥ ४३ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं, तस्यार्द्धस्य कदाचिदर्द्धमधिकं बालत्ववृद्धत्वयोः । शेषं व्याधिजरावियोगविवशैः सेवादिभिर्नीयते, मानुष्ये चपले चलाचलतमे सौख्यं कुतः प्राणिनाम् ? ॥ ४४ ॥ एकजन्मसुखस्यार्थे, कल्पान्तं नरकायुषः । अचिराय शरीराय, किमर्थं पापमाचरेत् ? ॥ ४५ ॥ इत्याकर्ण्य गुरोर्वाचं, प्रबुद्धः स्माह भूपतिः । कियदायुर्विभो ! मेऽस्ति, स जगौ दिवसत्रयम् ॥ ४६ ॥ श्रुत्वैतद्विदधे भूमान्, पश्चात्तापं निजे हृदि । अहो मया महैश्वर्यप्रमादविवशात्मना ॥ ४७ ॥ सुकृतं न कृतं किञ्चिद्भवान्तरसुखावहम् । वृथैव हारितं जन्म, पापकर्मैककारिणा ॥ ४८ ॥ युग्मम् ॥ भुवनं जिनस्य न कृतं, न च बिम्बं नैव पूजिता गुरवः । दुस्तपतपो न तप्तं, जन्म मुधा हारितं मूढैः ॥ ४९ ॥ कुर्वन्ननुशयं भूमानेवं सर्वाङ्गिसाक्षिकम् । आश्वासितो मुनीन्द्रेण, सुधामधुरया गिरा ॥५०॥ वर्षकोटितपोभिर्यत्, पुण्यमन्यैरुपार्ज्यते । अन्तर्मुहूर्त्तमात्रेण, तदन्येन महात्मना ॥५१॥ तथापि साम्प्रतं राजन्!, शुद्धसम्यक्त्वपूर्वकम् । भजस्व देशतो धर्मं, द्वादशव्रतभूषितम् ॥५२॥ सम्यग्दृष्टेरनुष्ठानं, यतः स्तोकमपि ध्रुवम् । निर्जरायै भवेद्राजन्!, भूयः क्लिष्टाष्टकर्मणाम् ॥५३॥ ततो गृहीत्वा साकारं, धर्मं सद्दर्शनोज्ज्वलम् । *राजा केवलिनं भक्त्या, प्रणम्यागान्निजं गृहम् ॥ ५४ ॥ अथ दध्यौ धराधीशश्चञ्चत्संवेगपूरितः ।* निराधारं धरैश्वर्यं, मोक्तुं युक्तं कथं मम ? ॥ ५५ ॥ आयुस्तु सुतरां स्तोकं, राज्यभारधुरन्धरः । कोऽप्यस्ति नात्मजो गेहे, ततोऽहं करवाणि किम् ? ॥ ५६ ॥ इति चिन्तातुरे राज्ञि, राज्याधिष्ठायिकाऽवदत् । पञ्चाधिवास्य दिव्यानि, मुच्यन्तां परितः पुरः ॥ ५७ ॥ अमीभिरभिषिक्तस्य, स्वकन्योद्वाहपूर्वकम् । राज्यं पुंसस्त्वया देयं, ततो वृद्धिर्भविष्यति ॥ ५८ ॥ ततस्तथा कृते राज्ञा, सचिवादिविचारतः । देवपालोऽभवद्राजा, जिनपूजानुभावतः ॥ ५९ ॥ सुतां मनोरमां तस्मै, प्रदाय समहोत्सवम् । ततः केवलिनः पार्श्वे, तपस्यामाददे

नृपः ॥ ६० ॥ चारित्रं निरतीचारमाराध्य द्विदिन सुधीः । देवोऽभूत्प्रथमे कल्पे, राजा सिंहरथाभिधः ॥ ६१ ॥ दिनमात्रं वरं सम्यक्, तपस्या समतान्विता । न पुनर्ममतायुक्ता, वर्षकोटिं निषेविता ॥ ६२ ॥ एकाहमपि निर्मोहं, प्रव्रज्यापालकः शमी । न चेन्मोक्षमवाप्नोति, तथापि स्वर्गभाग्भवेत् ॥ ६३ ॥ यत.—प्रणिहन्ति क्षणार्द्धेन, साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ ६४ ॥ अपि प्रासवतः भोग्यैः, समृपदं पूर्वभूभुजः । अज्ञातकुलजात्यादिस्वरूपत्वात्पुनस्तदा ॥ ६५ ॥ भूसूनो देवपालस्य, श्रेष्ठिसामन्तमन्त्रिणः । आज्ञां न केऽपि मन्यन्ते, स्वजातिबलगर्विताः ॥ ६६ ॥ युग्मम् ॥ ततोऽसौ चिन्तयामास, प्रज्ञाविक्रमसम्पदाम् । लीलावेश्म पुरा मेऽस्ति, प्रभुः श्रेष्ठी पुराग्रणीः ॥ ६७ ॥ समाहूय महामात्यपदे स्थाप्यः स गौरवात् । तन्महिम्ना ममाप्यस्ति नावृतिर्भाविनी पुरे ॥ ६८ ॥ आहूतोऽपि ततः श्रेष्ठी, प्रतीहारेण भूभुजा । नायाति जातिप्रभुतामदोन्मत्ततया परम् ॥ ६९ ॥ ततो दूनमना भूमान्, गत्वा सान्तःपुरो बहिः । प्रणम्य श्रीजिनाधीशं, कदीरस्थं व्यजिज्ञपत् ॥ ७० ॥ निराज्यभोज्यवद्राज्यमहैश्वर्यं प्रभोज्झितम् । किमर्थं भवताऽदायि, प्रसन्नेन मम प्रभो ! ॥ ७१ ॥ आविर्भूय तदाऽवादि, राज्ञे देवतया तया । मा खेदं कुरु वत्स । त्वं, शृणु वार्त्तां मदीरिताम् ॥ ७२ ॥ मृन्मयं गजमारुह्य, राजकेलिस्त्वया पुरः । परितोऽस्या विधातव्या, विस्मयं कुर्वताङ्गिनाम् ॥ ७३ ॥ दिव्यानुभावतो हस्ती, सजीवोऽसौ भविष्यति । तवाज्ञा पौरलोकेषु, भाविन्यस्खलिता ततः ॥ ७४ ॥ परं जैनेन्द्रपूजायां, सावधानो भृशं भव । यदसौ कामधुक् सर्वं, प्रसूतेऽभीप्सितं फलम् ॥ ७५ ॥ इत्याकर्ण्य गिरं देव्या, मुदितो मेदिनीपतिः । तद्बिम्बं भक्तितोऽभ्यर्च्य, गृहं प्राप्य च विस्मितः ॥ ७६ ॥ कुम्भकारैर्विनिर्माप्य, गजेन्द्रं तादृशं जवात । ऐरावतमिवोत्तुङ्गं, हेमालङ्कृतिमण्डितम् ॥ ७७ ॥ आरुरोह स्वयं याव—

त्तावद्दिव्यानुभावतः । स गजो गर्जितं चक्रे, सजीवीभूय तत्क्षणात् ॥ ७८ ॥ त्रिभिर्विशेषकम् । तमारूढस्ततो राजा, देवराज इव भजन् । आजगाम युगाधीशं, नन्तुं भक्तिनरञ्जितः ॥ ७९ ॥ तं नमस्कृत्य पञ्चाङ्गैः, प्रणम्य पृथिवीपतिः । लीलया कलयन् केलिं, करोति स्म सविस्मयम् ॥ ८० ॥ तं तादृशं गजारूढं, मरूढामूढविक्रमम् । सामन्तश्रेष्ठिमुख्यास्ते, नमन्ति स्म सविस्मयाः ॥ ८१ ॥ देवपालस्ततो भूमीपालस्तं श्रेष्ठिपुङ्गवम् । अस्थापयन्महामात्यपदे पुण्यनयास्पदे ॥ ८२ ॥ ततः सुकृतसम्भार-सम्भावितमनाकुलम् । मन्त्रिन्यस्तधराभारं, स राज्यं बुभुजे चिरम् ॥ ८३ ॥ स श्रेष्ठी जिनदत्तोऽपि, प्राप्य मन्त्रिपदं परम् । विदधे पौरलोकानामुपकारपरम्पराम् ॥ ८४ ॥ अन्यदा तत्पुरोद्याने, दमसारमहामुनिः । सर्ववित्समवासार्षीद्गीर्वाणश्रेणिसेवितः ॥ ८६ ॥ आयासीन्नृपतिर्नन्तुं, तं तदा मुनिपुङ्गवम् । सामन्तामात्यसंयुक्तः, समं दयितया तया ॥ ८७ ॥ त्रिःपरीय परीवार-सहितं महितं सुरैः । महीस्वामी प्रणम्यामुं, यथोचितमुपाविशत् ॥ ८८ ॥ हैमारविन्दमासीनो, नवीनोदितभानुवत् । वाचो विस्तारयामास, सम्यग्मार्गप्रकाशिनीः ॥ ८९ ॥ आधारो यस्त्रिलोक्या जलधिजलधरार्केन्दवो यन्नियोज्या, भुज्यन्ते यत्प्रसादादसुर-सुरनराधीश्वरैः सम्पदोऽपि । आदेश्या यस्य चिन्तामणिसुरसुरभीकल्पवृक्षादयस्ते, श्रीमान् जैनेन्द्रधर्मः किसलयतु स वः शाश्वता-नन्दलक्ष्मीम् ॥ ९० ॥ शुक्लपक्षे यथा चन्द्रः, कलया कलयाऽधिकम् । वर्द्धते धर्मवान् प्राणी, सम्पदाऽपि तथाऽनिशम् ॥ ९१ ॥ साधुश्रावकभेदाभ्यां, स धर्मो द्विविधो मतः । विशुद्धं तस्य सम्यक्त्वं, मूलमाहुर्महर्षयः ॥ ९२ ॥ अर्हतां त्रिजगज्जन्तुजातजी-वातुसम्पदाम् । सम्यग्ज्ञानैकपूर्वाया, भक्त्यास्तच्छुद्धिरुल्लसेत् ॥ ९३ ॥ द्रव्यभावप्रकाराभ्यामर्हद्भक्तिर्द्विधा स्मृता । तत्राद्यानेकधा पूजा, तदाज्ञाराधनाऽपरा ॥ ९४ ॥ आद्योत्कृष्टफलं तत्र, कल्पावधि सुखोदयः । भावभक्तिफलं सम्यग्, महोदयपदस्थितिः

॥ ९४ ॥ यतः—‡ उक्कोसं दवपूअमाराहिय जाइ अच्चुअं जाव । भावपूएण पावइ, अंतमुहुत्तेण निवाणं ॥ ९९ ॥ मेरुस्स सरिसवस्स य, जत्तियमित्तं तु अंतरं होइ । दवपूअभावपूआण, अंतरं तत्तियं जाण ॥ ९६ ॥ सात्त्विकी राजसी भक्तिस्तामसीति त्रिधाऽथवा । जन्तोस्तत्तदभिप्रायविशेषादर्हतो भवेत् ॥ ९७ ॥ अर्हत्सम्यग्गुणश्रेणिपरिज्ञानैकपूर्वकम् । अमुव्रता मनोरथमुपसर्गेऽपि भूयसि ॥ ९८ ॥ अर्हत्साम्बान्धिकार्यार्थं, सर्वस्वमपि दित्सुना । भव्याङ्गिना महोत्साहात्, क्रियते या निरन्तरम् ॥ ९९ ॥ भक्तिः शक्त्यनुसारेण, निःस्पृहाशयवर्त्तिना । सा सात्त्विकी भवेद्भक्तिर्लोकद्वयफलावहा ॥ २०० ॥ त्रिभिर्विशेषकम् । यदैहिकफलप्राप्तिहेतवे कृतनिश्चया । लोकरञ्जनवृत्त्यर्थं, राजसी भक्तिरुच्यते ॥ १ ॥ द्विषदापत्प्रतीकारकृते या कृतमत्सरम् । दृढाशयाद्विधीयेत, सा भक्तिस्तामसी भवेत् ॥ २ ॥ रजस्तमोमयी भक्तिः, 'सुप्रापा सर्वदेहिनाम् । दुर्लभा सात्त्विकी भक्तिः, शिवावधिसुखावहा ॥ ३ ॥ उत्तमा सात्त्विकी भक्तिर्मध्यमा राजसी पुनः । जघन्या तामसी ज्ञेयाऽनादृता तत्त्ववेदिभिः ॥ ४ ॥ अथवा पञ्चधा भक्तिर्भेदैः पुष्पार्चनादिभिः । विधिवद्विहिता दत्ते, सुखानि निखिलान्यपि ॥ ५ ॥ यत.—पुष्पाद्यर्चा तदाज्ञा च, तद्द्रव्यपरिरक्षणम् । उत्सवास्तीर्थयात्रा च, भक्तिः पञ्चविधार्हति ॥ ६ ॥ स्यादाभोगादनाभोगाद्, द्विधा वा भक्तिरार्हती । आद्या सर्वोत्तमा ज्ञेया, द्वितीयादिगुणावहा ॥ ७ ॥ यत·—

---

‡ उत्कृष्टां द्रव्यपूजामाराध्य यात्यच्युतं यावत् । भावपूजया प्राप्नोति अन्तर्मुहूर्तेन निर्वाणम् ॥ ९९ ॥ मेरोः सर्षपस्य च यावन्मात्रं त्वन्तरं भवति । द्रव्यपूजाभावपूजयोरन्तरं तावज्जानीहि ॥ १६ ॥

* देवगुणपरिन्नाणा, तब्भावाणुगयमुत्तमं विहिणा । आयरसारं जिणपूअणेण आभोगदव्वथओ ॥ ८ ॥ इत्तो चरित्तलाभो, होइ लहु सयलकम्मनिद्दलणो । ता इत्थ सम्ममेव हि, पयट्टियव्वं सुदिट्ठीहिं ॥ ९ ॥ अनाभोगमाह—पूआविहिविरहाओ, अपरिन्नाणाओ जिणगयगुणाणं । सुहपरिणामकयत्ता, एसोऽणाभोगदव्वथओ ॥ १० ॥ गुणठाणठाणगुत्ता, एसो एवंपि गुणकरो चेव । सुहयरभावविसुद्धिहेउओ बोहिलाभाओ ॥ ११ ॥ असुहक्खएण धणियं, धन्नाणं आगमेसिभद्दाणं । अमुणियगुणेवि नूणं, विसए पीई समुल्लसइ ॥ १२ ॥ होइ पओसो विसए, गुरुकम्माणं भवाभिनंदीणं । पत्थंमि आउराण व, उवट्ठिए निच्छिए मरणे ॥ १३ ॥ इत्तोऽवियत्तं नूणं, जिणबिंबे जिणवरिंदधम्मे वा । असुहब्भासभयाओ, पओसलेसंपि वज्जंति ॥ १४ ॥ तृणगोमयकाष्ठाग्निप्रमुखैरष्टधाथवा । भेदैर्जिनेश्वरे भक्तिर्गदिता योगदृष्टिभिः ॥ १५ ॥ यतः—तृणगोमयकाष्ठदीपकानलरत्नोडुरवीन्दुभानिभा । जिनभक्तिरिहार्द्रपुद्गलात्तनुते मुक्तिसुखानि तद्भवे ॥ १६ ॥ सम्यग्जिनेन्द्रसद्भक्तिर्हृदये शुद्धचेतसा । विधेयं प्रथमं स्थानं,

---

* देवगुणपरिज्ञानात् तद्भावानुगतमुत्तमं विधिना । आदरसारं जिनपूजनेन आभोगद्रव्यस्तवः ॥ ८ ॥ इतश्चारित्रलाभो भवति लघु सकलकर्मनिर्दलनः । तस्मादत्र सम्यगेव प्रयतितव्यं सुदृष्टिभिः ॥ ९ ॥ पूजाविधिविरहात् अपरिज्ञानाज्जिनगतगुणानाम् । शुभपरिणामकृतत्वात् एषोऽनाभोगद्रव्यस्तवः ॥ १० ॥ गुणस्थानस्थानकोक्त, एष एवमपि गुणकर एव । शुभतरभावविशुद्धिहेतुतो बोधिलाभात् ॥ ११ ॥ अशुभक्षयेण बाढं धन्यानामागमिष्यद्भद्राणाम् । अमुणितगुणेऽपि नूनं विषये प्रीतिः समुल्लसति ॥ १२ ॥ भवति प्रद्वेषो विषये गुरुकर्मणां भवाभिनन्दिनाम् । पथ्य आतुराणामिव उपस्थिते निश्चिते मरणे ॥१३॥ इतोऽप्रीतिकं नूनं जिनबिम्बे जिनवरेन्द्रधर्मे वा । अशुभाभ्यासभयात् प्रद्वेषलेशमपि वर्जयन्ति ॥१४॥

निदानं तीर्थकृत्पदः ॥ १७ ॥ निशम्य देशनामेवं, स राजा गुरुसन्निधौ । प्रतिपद्याऽऽर्हतं धर्मं, सम्यग्दर्शनवासितः ॥ १८ ॥ जिनेन्द्रमन्दिरं हैमं, निकषा राजमन्दिरम् । निर्माय नगरस्यान्तः, प्रतिमां तामतिष्ठिपत् ॥ १९ ॥ युग्मम् ॥ ( तामिति कुटीरमध्यस्थितां ) पात्रेऽर्हति धनं न्यस्तं, रत्नपात्र इवामृतम् । प्रकल्पते नृणां भुक्तिमुक्तिसौख्योपपत्तये ॥ २० ॥ इति ध्यात्वा स्वयं भूमानाद्यं स्थानं सृजन् सुधीः । महति स्म जिनेन्द्रं त्रिर्निरिच्छयाऽऽन्तरभक्तिभृत् ॥ २१ ॥ कैलासासदृशान्यूर्व्यामर्हच्चैत्यान्यचीकरत् । यच्चैत्यनिर्मितेरर्हत्पदवी प्राप्यते नृणाम् ॥ २२ ॥ केवलिना प्रतिष्ठाप्य, महोत्सवपुरस्सरम् । अतिष्ठिपज्जिनाधीशप्रतिमास्तेषु काञ्चन ॥ २३ ॥ रत्नमाणिक्यगाङ्गेयालङ्कारैस्ता अभूषयत् । तासां स्नानोत्सवं भक्त्या, विदधे सर्वपर्वसु ॥ २४ ॥ तदाज्ञां पालयामास, पञ्चाश्रवनिरोधतः । वृद्धिं निनाय तद्द्रव्यं, दानादानविधानतः ॥ २५ ॥ साधर्मिकेषु वात्सल्यं, तन्वन् दीनदयामयम् । निर्ममे विधिना तीर्थयात्राः पाविन्यकारिणीः ॥ २६ ॥ षड्भिः कुलकम् । एवमाराधयन्नाद्यस्थानकं जिनभक्तिभृत् । बबन्धे तीर्थकृत्कर्म, देवपालो नरेश्वरः ॥ २७ ॥ मनोरमान्यदा देवी, नरेन्द्रेण समं बहिः । व्रजन्ती कञ्चनालोक्य, नरं काष्ठभरोद्वहम् ॥ २८ ॥ मूर्छामाप्य क्षण शीतोपचारैर्जातचेतना । कुर्वन्ती नृपतेर्हर्षमस्मार्षीत्प्राग्भवं भवम् ॥ २९ ॥ युग्मम् ॥ ततः सा नृपतिं स्माह, स्वामिन्नेष पतिर्मम । आसीद् दरिद्री दुष्कर्मा, प्राग्भवे काष्ठहारकः ॥ ३० ॥ अन्येद्युरमुना सार्कं, गतया काष्ठहेतवे । मयाऽदर्शि जिनाधीशबिम्बं गिरितटीतटे ॥ ३१ ॥ प्रक्षाल्य पयसा पूर्वं, पूजयित्वा सुमादिभिः । नमश्चक्रे मया भक्त्या, प्रमृतप्रीतचेतसा ॥ ३२ ॥ अयमेव मया प्रोचे, गिरा मधुरया तदा । नत्वाऽर्हत्प्रतिमामेतां, स्वं जन्म त्वं कृतार्थय ॥ ३३ ॥ अस्य देवाधिदेवस्य, जगदानन्ददायिनः । भवकोटिकृतं पापं, विनाशं याति वन्दनात् ॥ ३४ ॥ असारमस्य-

जीवत्वान्न परं श्रद्दधे कुधीः । हारयमेव तदा कुर्वन्न ननाम मनागपि ॥ ३५ ॥ प्राणनाथ ! तथैवायं, दुःखान्यनुभवंस्ततः । दुष्कर्मणा करोत्यत्र, दुर्भरोदरपूरणम् ॥ ३६ ॥ ततोऽहं परमैश्वर्यं, प्राप्तं तत्सुकृतोदयात् । उच्चैःकुलं पुरं प्राप्ता, दुष्प्रापमकृतात्मभिः ॥ ३७ ॥ नृपोऽपि तद्गिरं श्रुत्वा, श्रुतिपीयूषवर्षिणीम् । विस्मितस्तं तदाहूय, देवलं काष्ठहारकम् ॥ ३८ ॥ तस्याः समक्षमप्राक्षीत्स्वरूपं प्राग्भवोद्भवम् । न्यक्षतः सोऽपि नमस्यस्तत्तथैव न्यवेदयत् ॥ ३९ ॥ परं नरेश्वरादिष्टं, जिनधर्मं जगद्धितम् । श्रेयोऽनर्हतया नैव, पापात्मा प्रत्यपद्यत ॥ ४० ॥ अभव्यः सर्वथा धर्मं, न श्रद्धत्ते मनागपि । दूरभव्योऽपि नो कश्चित्, श्रद्धाति च कश्चन ॥ ४१ ॥ श्रद्धत्ते भव्य एवाङ्गी, धर्मं निश्छद्मचेतसा । आसन्नसिद्धिकः सम्यक्, श्रद्धाति करोति च ॥ ४२ ॥ अयोग्यं धर्मरत्नस्य, तं विज्ञाय विशांपतिः । स्फुरत्संवेगरङ्गात्मा, निजावासमशिश्रियत् ॥ ४३ ॥ देवसेनाभिधं ज्येष्ठपुत्रं सद्वृत्तसम्पदम् । मनोरमामहादेवीकुक्षिमुक्तामणिं ततः ॥ ४४ ॥ निवेश्य सोत्सवं राजा, राज्ये शिश्राय संयमम् । चन्द्रप्रभगुरोः पार्श्वे, समं देव्या तया क्रमात् ॥ ४५ ॥ ततस्तपस्यामासाद्य, स राजा रजसोज्झिताम् । अध्यैष्टैकादशाङ्गानि, नव पूर्वाणि चात्मवित् ॥ ४६ ॥ तत्रापि प्रथमं स्थानमार्हतीं भक्तिमुद्वहन् । विधिना विदधे धीमान्, राजर्षिर्गुरुणोदितः ॥४७॥ चतुस्त्रिंशदतिशयैर्विश्वानन्दविधायिनाम् । अर्हतां निर्ममे ध्यानं, धृतिमानेष नित्यशः ॥ ४८ ॥ विश्वत्रितयचैत्यस्थाः, प्रतिमाः शाश्वता निजे । अशाश्वता अपि स्वान्ते, विधाय प्रणनाम सः ॥ ४९ ॥ आशातनापरित्यागं, त्रिधा शुद्ध्याऽर्हदादिषु । कुर्वन् चकार सर्वत्र, तेषां सद्गुणकीर्त्तनम् ॥ ५० ॥ अर्हतां जन्मदीक्षादिभूमीस्तीर्थतया स्मृताः । ववन्दे विधिना गत्वा, तत्र सूत्रार्थतत्त्ववित् ॥ ५० ॥ इत्याराध्य पदं पूर्वं, निश्छद्मजिनभक्तिमान् । षष्ठाष्टमादिमासान्ततपोभिर्दुरतैः परैः ॥ ५१ ॥ निरतीचा-

रचारित्राराधनात्क्रमतोऽभवत्। स मुनिः प्राणते स्वर्गे, स्वर्गी स्वर्गेश्वरः प्रभुः ॥५२॥ विधिनाऽऽराध्य चारित्रं श्रमण्यपि मनोरमा। विधूय युवतीवेदं, लेभे तत्रैव देवताम् ॥ ५३ ॥ ततश्च्युतो विदेहेषु, भावी तीर्थंकरो नृपः । राज्ञी मनोरमा तस्य, गणभृच्च भविष्यति ॥ ५४ ॥ एवं य. प्रथमस्थानं, विधिनाऽऽराधयेत्सुधीः । आसादयत्यसौ सार्वं, पदं सर्वश्रियां पदम् ॥ ५५ ॥ श्रीमज्जिनेन्द्रोज्ज्वलभक्तियुक्तं, श्रीदेवपालक्षितिपालवृत्तम् । श्रुत्वाऽऽश्वमानन्दपदप्रदायि, सृजन्तु सम्यक्पदमद्भुताश्रि ॥ ५६ ॥ इति **श्रीविंशतिस्थानकाधिकारे तपागच्छाधिराजश्रीसोमसुन्दरसूरिशिष्यपण्डितश्रीजयचन्द्रसूरिशिष्यश्रीजिनहर्षगणिविरचिते प्रथमस्थानककथानकं संपूर्णम् ॥**

अथ द्वितीय स्थानकं सिद्धभक्तिरूपं निगद्यते, यथा—तत्र सकलकर्मक्लेशातीताः शाश्वतचिदानन्दमयस्वरूपा लोकाग्रक्षेत्रस्थायिनः परमात्मानः सिद्धाः, यत.—ध्मातं निजं येन पुराणकर्म, यो वा गतो निर्वृतिसौधमूर्ध्नि । ख्यातोऽनुशास्ता परिनिष्ठितार्थो, य. सोऽस्तु सिद्धः कृतमङ्गलो मे ॥ १ ॥ तेषां स्मरणध्यानतत्प्रतिमावन्दनपूजनतन्नामजापावर्णवादाशातनावर्जनादिना विवेकिना सततं भक्तिर्विधेया, यत.—अर्हतामपि मान्यानां, परिक्षीणाष्टकर्मणाम् । सन्तः पञ्चदशभिदां, सिद्धानां न स्मरन्ति के। १ ॥ २ ॥ निरञ्जनाश्चिदानन्दस्वरूपा रूपवर्जिताः । स्वभावभासलोकाग्राः, सिद्धानन्तचतुष्टयाः ॥ ३ ॥ साद्यनन्तस्थितिजुषो, गुणैकत्रिंशतान्विता. । परमेशाः परात्मानः, सिद्धा मे शरणं सदा ॥ ४ ॥ न जातिर्न मृतिस्तत्र, न भयं न पराभवः । तथा न क्लेशलेशोऽपि, यत्र सिद्धाः प्रतिष्ठिता ॥ ५ ॥ मोचास्तम्भ इवासार, संसारः क्वैष सर्वथा । क्व च लोकाग्रजं लोक-

सारत्वात्सिद्धवैभवम् ॥ ६ ॥ इति, सिद्धानां गुणनयातीतत्वेऽपि अष्टौ गुणा, स्मृता., यथा—‡ सम्मत्तनाणदंसणवीरिय सुहुमं तहेव अवगहणं। अगुरुलहु-अवावाहं, अट्ठ-गुणा-हुंति-सिद्धाणं ॥ ७ ॥ ते-च पञ्चदशभेदा भवन्ति यथा—केऽपि स्वान्यगृहस्थ-पण्डपुरुषस्त्रीलिङ्गतोऽन्ये स्वयंप्रत्येकप्रतिबुद्धबोधिततया तीर्थेऽन्वतीर्थे परे। सिद्धास्तीर्थकृतोऽथ केचिदितरे नैके तथैकाकिनस्ते सर्वेऽपि दिशन्तु पञ्चदशधा सिद्धाः समृद्धिं सताम् ॥ ८ ॥ श्रीसिद्धभक्तिचिकीर्षुणा महातीर्थपुण्डरीकाष्टापदसम्मेतशिखरोज्जयन्तादिषु सिद्धस्थानेषु विधिना तीर्थयात्रा विधेया, यतः—† अट्ठावयंमि उसभो, सिद्धिगओ वासुपुज्ज चंपाए। पावाए वद्धमाणो, अरिट्ठनेमी उ उज्जंते ॥ ९ ॥ अवसेसा तित्थयरा, जाइजरामरणबंधणविमुक्का। सम्मेयसेलसिहरे, वीसं परिनिव्वुए वंदे ॥१०॥ तथा—चित्तस्स पुन्निमाए, समणाणं पंचकोडिपरिवरिओ। मुत्तिनिलयंमि पत्तो, सिरिसित्तुंजयमहातित्थे ॥ ११ ॥ ( श्रीपुंडरीक-गणधर इति शेषं ) तेन तद्यात्रा ह्यात्मनः परमं पवित्रीकरणं, यतः—अन्यतीर्थेषु यात्रासहस्रैः पुण्यमाप्यते। तदेकयात्रया पुण्यं, शत्रुञ्जयगिरौ भवेत् ॥१२॥ पदे पदे विलीयन्ते, भवकोटिकृतान्यपि। पापानि पुण्डरीकाद्रेर्यात्रायां गच्छतो विधेः ॥१३॥ अन्यत्र

---

‡ सम्यक्त्वज्ञानदर्शनवीर्याणि सूक्ष्म तथैव अवगाहनम्। अगुरुलघुत्व अव्याबाधत्वमष्ट गुणा भवन्ति सिद्धानाम ॥ ७ ॥

† अष्टापदे ऋषभ सिद्धिं गतो वासुपूज्यश्चम्पायाम्। पापाया वर्धमानोऽरिष्टनेमिस्तु उज्जयन्ते ॥९॥ अवशेषास्तीर्थंकरा जातिजरामरणबन्धनविमुक्ता। सम्मेतशैलशिखरे विंशति परिनिर्वृता (तान्) वन्दे ॥ १० ॥ चैत्रस्य पूर्णिमायां श्रमणानां पञ्चकोट्या परिवृत। मुक्तिनिलये प्राप्त श्रीशत्रुञ्जयमहातीर्थे ॥ ११ ॥

वर्षकोट्या यत्तपोदानदयादिभि. । प्राणी बध्नाति सत्कर्म, मुहूर्त्तादिह तद् ध्रुवम् ॥१४॥ णमो सिद्धाणमित्येतत्पदं सिद्धिपदप्रदम् । सिद्धध्यानैकतानेन, मनसा बहुशः स्मरेत् ॥ १५ ॥ यत.—× सिद्धाण नमुक्कारो, जीवं मोएइ भवसहस्साओ । भावेण कीरमाणो, होइ पुणो बोहिलाभाए ॥ १६ ॥ अथैतत्स्थानकं कुर्वन्, सिद्धभक्तितरङ्गितः । गुरूदितेन विधिना, सम्यग्दृष्टिः प्रशान्तहृत् ॥१७॥ सिद्धस्थानेष्वमीषां यो, मूर्त्तीः प्रासादवर्त्तिनीः । निर्माप्यार्चयति स्तौति, हस्तिपालनरेन्द्रवत् ॥ १८ ॥ स वश्यचूर्णवल्लब्ध्वा, तीर्थकृत्कर्म दुर्लभम् । भवे तृतीयेऽर्हल्लक्ष्मीं, वशीकृत्य प्रमोदते ॥ १९ ॥ त्रिभिर्विशेषकम् । तथाहि—अत्रैव भरतक्षेत्रे, श्रीमत्साकेतपत्तने । हस्तिपालनरेन्द्रोऽभूत्सुरेन्द्र इव तेजसा ॥ २० ॥ वासांसीव प्रभुर्दत्त्वा, यो यशांसि दिशो दश । युगपत् शोभयामास, निवास सर्वसम्पदाम् ॥ २१ ॥ तन्मन्त्री चैत्रनामासीत्, पवित्रः पात्रदानतः । आधारः पौरलोकानां, सदाचाराध्वगामिनाम् । ॥२२॥ सोऽन्यदा प्रभुरादेशात्, श्रीभीमनृपसंनिधौ । आयासीत्पुरि चम्पायां राजकार्यचिकीर्षया ॥ २३ ॥ पुरश्रियं ततो मन्त्री, पश्यन् विश्वातिशायिनीम् । श्रीवासुपूज्यतीर्थेशप्रासादे जगदद्भुते ॥ २४ ॥ प्राप्तवान् पुण्ययोगेन, धर्मघोषमुनीश्वरम् । अभङ्गरूपसौन्दर्य, लक्ष्मीकेलिनिकेतनम् ॥ २५ ॥ दृष्ट्वा दृग्द्वयुत्सवाकारं, धर्ममूर्त्तिमिवामलम् । स्वभावेन विनीतत्वात्, प्रणम्योपाविशत्पुरः ॥ २६ ॥ त्रिभिर्विशेषकम् । योग्यतां तस्य विज्ञायावधिज्ञानोपयोगत· । गुरुणापि तदाऽकारि, देशना धर्मदेशना ॥ २७ ॥ संसारापारकान्तारभ्रान्तश्रान्तसुधासराः । धर्मः सम्यग् जिनेन्द्रोक्त·, प्राप्यते कर्मलाघवात् ॥ २८ ॥ जन्तूनां पालनादेव, स धर्म· परमः स्मृतः । जीवितादपरं प्राणिप्रियं नैव यतो भवेत् ॥ २९ ॥ एकस्मिन् रक्षिते जीवे, त्रैलोक्यं रक्षितं भवेत् । घातिते घातितं तस्मात्

× सिद्धाना नमस्कारो जीव मोचयति भवसहस्त्रा । भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ १६ ॥

जन्तून् घातयेत्सुधी. ॥ ३१ ॥ जीवा. संसारिणो मुक्ता., पञ्चाक्षा. संज्ञ्यसंज्ञिनः। स्युर्द्विनिचतुरक्षाश्च, पर्याप्ता इतरेऽपि च ॥ ३२ ॥ जीवस्थानान्यमून्यर्हत्प्रणीतानि प्रयत्नतः। विज्ञाय रक्षणीयानि, सम्यग्धर्मेप्सुनाऽङ्गिना ॥ ३३ ॥ परागमेऽप्युक्तम्—यत्र जीवः शिवस्तत्र, न भेदः शिवजीवयोः। न हिंस्यात्सर्वभूतानि, शिवभक्तिचिकीर्षकः ॥ ३४ ॥ तत्र जीवदया साधोर्विंशत्या स्याद्विशोपकैः। तदे(सार्ध)कैनाङ्गिनो रक्षा, गदिता गृहमेधिनः ॥ ३५ ॥ मुक्ता एकस्वभावाः स्युर्जन्मादिक्लेशवर्जिताः। अनन्तदर्शनज्ञान–वीर्यानन्दमयाश्च ते ॥ ३६ ॥ चिदानन्दैकरूपाणां, सिद्धानां गतकर्मणाम्। जराजन्मभृतिक्लेशास्तत्र न स्युः कदाचन ॥ ३७ ॥ तेषां स्थानं तु लोकाग्रं, सिद्धिक्षेत्रमिति स्मृतम्। अनन्तानन्तसौख्यश्रीविलासवरवेश्मभम् ॥ ३८ ॥ सुरासुरनरादीनां, यानि सौख्यानि संसृतौ। ततोऽनन्तगुणं शर्म, स्वभावान्निर्वृतात्मनाम् ॥ ३९ ॥ यथामृतरसास्वादी, नान्यत्र रमते जनः। तथा मुक्तिसुखाभिज्ञो, रज्यते न सुखान्तरे ॥ ४० ॥ यत्रैको निर्वृतात्मा स्यात्तत्रानन्ता भवन्त्यमी। अमूर्तत्वादमीषां नो, विबाधाऽस्ति परस्परम् ॥ ४१ ॥ त्रिशतानि त्रयस्त्रिंशद् धनुषामवगाहना। त्रिभागेनाधिकोत्कृष्टा, निर्वृत्तौ निर्वृतात्मनाम् ॥ ४२ ॥ रत्नित्रिभागतो न्यूनाश्चत्वारो रत्नयः स्मृताः। मध्यमातिकनिष्ठा तु, हस्तश्चाष्टाङ्गुलाधिकः ॥ ४३ ॥ सिद्धध्यानाद्विलीयन्ते, जन्तोर्दुष्कर्मकोटयः। पीयूषविन्दुमानेण, यथा तीव्रविषोर्मयः ॥ ४४ ॥ सम्यक् सिद्धिस्वरूपं यो, निजात्मप्रतिबिम्बितम्। पश्यति त्रिजगत्पूज्यं, पदं तस्य न दुर्लभम् ॥ ४५ ॥ इत्यादिदेशनां श्रुत्वा, धर्मघोषगुरोस्ततः। सिद्धभक्त्या समं मन्त्री, श्राद्धधर्ममशिश्रियत् ॥ ४६ ॥ निर्माय राजकार्याणि, ततो मन्त्री पवित्रहृत्। गुरुराजं नमस्कृत्य, क्रमात्प्रापन्निजं पुरम् ॥ ४७ ॥ किमप्याश्चर्यमालोकि, मन्त्रिंस्तत्र पुरे त्वया। इत्यार्यातो नरेन्द्रेण, धीसखरतमुदाहरत् ॥ ४८ ॥ प्राप्तोऽहं नगरे तत्र, नगरेकारिमन्दिरे ॥ ( पर्वतभ्रान्तिकारिमन्दिरे

इत्यर्थः ) जगत्त्रयनमस्यस्य, वासुपूज्यजिनेशितुः ॥ ४९ ॥ प्रासादं जगदाह्लादप्रदमद्राक्षमुन्नतम् । त्रैलोक्यसुन्दरं नाम, धाम स-
र्वाद्भुतश्रियः ॥ ५० ॥ युग्मम् । दिवस्पतिरपि प्रेक्ष्य, यस्य सौन्दर्यसम्पदम् । स्वर्विमानश्रियो नैव, स्मरत्यपि मनाग् विभो ।
॥ ५१ ॥ तत्र त्रैलोक्यनेत्राणां, कार्मणं मणिनिर्मिताम् । प्रतिमामुपमातीतां, दिव्याभरणभूषिताम् ॥ ५२ ॥ तस्य नेत्रातिथीकृत्य,
जिनेन्द्रस्य जगत्पतेः । साफल्यं मे दृशां जज्ञे, सत्पुण्योदययोगतः ॥ ५३ ॥ युग्मम् । तत्र श्रीधर्मघोषाख्यमुनिनाथस्य स-
न्निधौ । धर्मचिन्तामणिः प्राप्तः, प्राप्तव्यावधिरार्हतः ॥ ५४ ॥ स्वरूपं तस्य सिद्धानां, सिद्धेश्च गुरुणोदितम् । मन्त्री धात्रीपतेरग्रे,
तदोवाच यथास्थितम् ॥ ५५ ॥ तत्स्वरूपं नृपस्वान्ते, रत्नादर्श इवोज्ज्वले । प्रतिबिम्बीभवत्साक्षाद्वीक्षितं तत्त्ववेदिभिः ॥ ५६ ॥
अथान्तरे नरेन्द्रस्योद्याने ध्यानेप्सितप्रदः । महर्षिः समवासार्षीद्, धर्मघोषो मुनीश्वरः ॥ ५७ ॥ नृपस्तदागमं ज्ञात्वा, प्रमोद-
भरमेदुरः । तत्रागत्य ववन्दे तं, मुनीन्द्रं मन्त्रिणा समम् ॥ ५८ ॥ समं सिद्धस्वरूपेण, गुरुणा करुणामया । धर्मः सम्यग् द्विधाऽऽ-
ख्यायि, साधुश्रावकभेदतः ॥ ५९ ॥ आर्हतः सार्हतं धर्मं, सद्दर्शनमनोहरम् । तदा प्रपद्य पुण्यात्मा, वन्दित्वा पृष्टवानिति ॥ ६० ॥
मुक्तात्मनां कथं भक्तिरस्माभिः क्रियते ? यतः । अमी दृग्गोचरीभावं, न भजन्ते कदाचन ॥ ६१ ॥ गुरुराख्यन्महाराज !, नि-
जात्मानं निरञ्जनम् । शाश्वतैकप्रतिष्ठानं, विमुक्तं निखिलैर्गुणैः ॥ ६२ ॥ सिद्धस्वरूपसाम्मिश्रं, निष्कषायो जितेन्द्रियः । यो ध्यायति
विशुद्धात्मा, तल्लयालीनमानसः ॥ ६० ॥ मुक्तात्मनां प्रतिकृतीः, सिद्धस्थानेषु संस्थिताः । नमस्करोति भावेन, द्विधा पूजापुर-
स्सरम् ॥ ६१ ॥ सिद्धभक्तिर्भवेत्तस्य, घातिकर्मविघातिनी । क्रमेण त्रिजगन्नाथपदसम्प्राप्तिबन्धनम् ॥ ६२ ॥ इत्याकर्ण्य विभुः पृ-
थ्व्याः, प्रमोदी गुरुसन्निधौ । सिद्धभक्तिपदं सम्यक्, प्रपेदे सन्नतोदयः ॥ ६३ ॥ आजगाम निजं धाम, प्रणम्याथ मुनीश्वरम् ।

सिद्धध्यानं सुखस्थानं, धृतिमान् विदधे नृपः ॥ ६४ ॥ सिद्धस्थानेषु पुण्येषु, सम्मेतशिखरादिषु । भूमान् पवित्रयामास, यात्रयात्मानमात्मवित् ॥ ६५ ॥ सिद्धक्षेत्रे जगत्पूज्ये, श्रीशत्रुञ्जयपर्वते । समन्त्री स व्यधाद्यात्रां, सिद्धभक्तितरङ्गितः ॥ ६६ ॥ नमो सिद्धाणमित्येतत्पदं प्रतिपदं सुधीः । मारापमारमुक्तात्मा, सस्मार क्रूरकर्महम् ॥ ६७ ॥ एवं मुक्तात्मनां भक्त्या, सम्यक् सिद्धान्तशुद्धया । बबन्धे तीर्थकृत्कर्म, राजेन्द्रः शर्मकारणम् ॥ ६८ ॥ पालयित्वा चिरं राज्यं, धात्रीमृद्धिनमन्त्रियुत् । तस्यैव श्रीगुरोः पार्श्वे, चारित्रं प्रत्यपद्यत ॥ ६९ ॥ अधीत्यैकादशाङ्गानि, राजर्षिः सिद्धभक्तिभाक् । सिद्धमूर्तीर्नमस्कर्तुं, श्रीसम्मेतगिरौ समम् ॥ ७० ॥ व्रजन् भक्तपरित्यागाभिग्रही गुरुणाऽन्यदा । स्वर्गिणाऽग्निकुमारेण, त्वत्रिस्तुत्यसहिष्णुना ॥ ७१ ॥ नानोपसर्गसंसर्गैर्मर्मभिद्भिरुपद्रुतः । मुनीन्द्रः क्षुत्पिपासादिव्यथया व्यथितोऽधिकम् ॥ ७२ ॥ द्विमासक्षपणैः क्षामदेहोऽपि न परं व्यधात् । सिद्धभक्तिविपर्यासं, न च तस्योपरि क्रुधम् ॥ ७३ ॥ आविर्भूय ततस्तेन, नाकिना प्रीतचेतसा । व्यथां संहृत्य वेगेन, रत्नवृष्टिर्विनिर्ममे ॥ ७४ ॥ ततो नत्वा मुनिं नाकी, जगाम निजसद्मनि । सिद्धमूर्तीश्च वन्दित्वा, सोऽपि पारणकं व्यधात् ॥ ७५ ॥ आराध्य निरतीचारं, राजर्षिः संयमं ततः । समाधिमृतिमासाद्य, देवोऽभूदच्युते महान् ॥ ७६ ॥ ततो राजा विदेहेषु, च्युत्वा तीर्थकरश्रियम् । आसाद्य जगदानन्दी, भावी भव्यनमोऽपहः ॥ ७७ ॥ तत्रैव त्रिदशो भूत्वा, मन्त्री च्युत्वा क्रमात्ततः । भावी गणभृतामाद्यस्तस्यैव श्रीजिनेशितुः ॥ ७८ ॥ एवं यः कुरुते भक्तिं, सततं निर्वृतात्मसु । सम्यग्दृष्टिस्त्रिधा शुद्धः, स भवेत्रिजगत्पतिः ॥ ७९ ॥ श्रीहस्तिपालनृपचित्रचरित्रमेतत्, श्रीसिद्धभक्तिकलितं हृदये निवेश्य । आराधनीयमनिशं किल सिद्धभक्तिस्थानं द्वितीयमिदमार्हतहर्षदायि ॥ ८० ॥

इति श्रीविंशतिस्थानकाधिकारे द्वितीयस्थानककथानकम् ॥

अथ तृतीयस्थानके विवेकिना निर्व्याजं विधेया प्रवचनभक्तिः, तत्र प्रवचनं चतुर्विधः श्रीश्रमणसङ्घस्त्रिभुवनजनपूज्यस्यापि श्रीजिनेश्वरस्य पूज्यः, पूज्यतमस्य तस्य भगवत्तरतीर्थकृत्कर्मार्जनमूलबीजं. यतः–*"एयंमि पूइयंमि, नत्थि तयं जं न पूइयं होइ। भुवणेवि पूयणिज्जो, न गुणी संघाउ जं अन्नो ॥१॥ द्रव्यभावभेदाभ्यां तद्भक्तिर्द्विप्रकारा, तत्राद्या–निरवद्यव्यापारैकनिष्ठस्वान्तवृत्तीनां निरतीचारचरणाचरणतत्पराणां निश्छद्मदशविधधर्मधुरन्धराणां साधूनां साध्वीनां च कल्प्यकालोचितन्यायागतवस्त्रपात्रान्नपानोपाश्रयादीनां सद्भावपूर्वं विधिवद्दानेन धर्मावष्टम्भजननं, श्रीसम्यक्त्वमूलद्वादशव्रतविभूषितात्मनां श्रीसर्वज्ञशासनप्रभावनाविर्भावकारिनैकप्राणिबोधिबीजनिदानविधिवत्प्रासादार्हत्प्रतिमाप्रतिष्ठाश्रीतीर्थयात्राऽऽचार्यादिपदमहोत्सवादिपुण्यानुबन्धिपुण्यकार्यपरम्पराकृतार्थीकृतन्यायार्जितनिजसम्पत्तिशालिनां श्रावकादीनां यथायोग्यं बहुमानपूर्वं भोजनवस्त्रताम्बूलफलचन्दनकुसुमादिभिर्वात्सल्यविधानं, भावभक्तिस्तु तत्तद्धर्मकार्येषु सीदतां तेषां यथायुक्ति स्थिरीकरणं, सम्यग्गुणवत्तया निश्छद्मविनयपूर्वं बहुमानदानं, तत्तद्गुणानुमोदनया तच्चित्तसंतोषजननं, तद्वैयावृत्त्यविधानेन समाधिसंपादनं, नमः श्रीप्रवचनायेति पुनः पुनरेकाग्रतया पदध्यानेनात्मनस्तन्मयीकरणं च, यतः—तत्त्वं प्रवक्तीत्येतस्मादन्वर्थादभिधीयते। बुधैः प्रवचनं सङ्घरूपमार्हतदर्शनम् ॥ १ ॥ तत्र वृद्धशिशुग्लानशिक्षाणां कल्प्यवस्तुभिः। भक्तिं यः कुरुते साधुर्गृही वा जिनदत्तवत् ॥ २ ॥ स सत्कारयित्वाऽऽद्ये, भवे तीर्थङ्करश्रियम्। तार्त्तीयिके च तां भुक्त्वा, शाश्वतानन्दमश्नुते ॥ ३ ॥ तथाहि–

---

* एतस्मिन् पूजिते नास्ति तद्यन्न पूजितं भवति। भुवनेऽपि पूजनीयो न गुणी सङ्घाद्यदन्यः ॥ १ ॥

द्वीपेऽस्मिन् भरतक्षेत्रे, वसन्तपुरपत्तने । आसीद्दासीकृताऽरातिररविन्दनरेश्वरः ॥ १ ॥ तत्रैव जिनदासोऽभून्निवासः सर्वसंपदाम् । श्रेष्ठी सद्दृष्टिपूतात्मा, राजमान्यः सदग्रणीः ॥ २ ॥ जिनदासी प्रिया तस्य, नाम्नाऽपि गुणतोऽप्यभूत् । वित्तव्ययी विवेकी च, जिनदत्तस्तयोः सुतः ॥ ३ ॥ यौवने प्राप्तवांश्चन्द्रातपविद्याधराधिपात् । परमात्सुहृदो हृद्यां, स विद्यां बहुरूपिणीम् ॥ ४ ॥ सोऽन्यदा कारयन्नाट्यमुद्याने सवयोऽन्वितः । चित्रकृद्हस्तविन्यस्तामपश्यच्चित्रपट्टिकाम् ॥ ५ ॥ जिनदत्तस्तमाचख्यौ, वक्षोजोल्लाससालसम् । कस्या रूपमिदं भद्र !, प्रोन्निद्रावयवाद्भुतम् ? ॥ ६ ॥ सोऽलपत्पुरि चम्पायां, धनेन धनदोपमः । प्रवाहः पुण्यकृत्यानां, सार्थवाहो धनावहः ॥ ७ ॥ तस्यास्ति भवने वस्तुद्वयमत्यन्तमुत्तमम् । एकमेकावलीहारो, मुक्तानामतिनिर्मलः ॥ ८ ॥ द्वितीयं भाग्यसौभाग्यधन्या विज्ञानशालिनी । कन्या हारप्रभानाम्नी, तस्या रूपमिदं पुनः ॥ ९ ॥ देवतादत्तविज्ञानवरसिद्धिविलोकनम् । कुर्वता लिखितं वृत्तिकृते दिङ्मात्रतो मया ॥ १० ॥ त्रिभिर्विशेषकं । जिनदत्तो निशम्येति, तद्रूपालोकविस्मितः । लक्षमूल्यं ददौ तस्मै, कटिसूत्रं मणिप्रभम् ॥ ११ ॥ ततोऽसौ गृहमागत्य, तद्रूपगतमानसः । योगीव लयलीनात्मा, विस्मृतान्यक्रियोऽभवत् ॥ १२ ॥ लक्षवित्तव्ययं कुर्वंश्चित्रमात्रकृते मुधा । वत्स ! मुग्धोऽसि तातेनोपालम्भीति स दुर्वचः ॥ १३ ॥ विद्याया बहुरूपिण्याः, प्रसादेन गरीयसा । तत्स्वरूपं परिज्ञाय, निखिलं श्रेष्ठिसूस्ततः ॥ १४ ॥ स्वपितृशिक्षासारेण, किञ्चिन्म्लानमुखाम्बुजः । एकाकी पुरि चम्पायां, सार्थवाहगृहं गतः ॥ १५ ॥ स्वप्नालोकितकल्पद्रुसंवादप्रीतचेतसा । गौरवं गौरवंशस्य, तस्य तेनापि निर्ममे ॥ १६ ॥ सदाचारतया तिष्ठन्नसौ तत्र पवित्रहृत् । तत्कुटुम्बं व्यधादर्हद्धर्मैककर्मैककर्मठम् ॥ १७ ॥ विज्ञातकुलशीलाय, तद्गुणाकृष्टहृत्क्रमात् । ददौ हारप्रभां कन्यां, धनस्तस्मै कृतोत्सवम् ॥ १८ ॥ नानायौतकदानेन, तस्मिन् सन्मानशालिना । जामातुर्व्यतनोत्तस्य, सार्थेशः

॥१४॥

प्रीतिमान्तराम् ॥ १९ ॥ दिनानि कतिचित्तत्र, स्थित्वाऽसौ स्वजनाग्रहात् । आगच्छन् प्रियया साकं, वसन्तपत्तनं प्रति ॥ २० ॥ मपन्नप्रतिमं दृष्ट्वा, विद्याधरमुनीश्वरम् । रथादुत्तीर्य वेगेन, स ननाम प्रियान्वितः ॥ २१ ॥ युग्मं ॥ स मुक्त्वा प्रतिमां दत्त्वा, दयात्मा सुकृताशिषम् । तयोर्विनीतयोरग्रे, विदधे धर्मदेशनाम् ॥ २२ ॥ तद्यथा-धर्मेण धर्ममलं समुपार्जयन्ति, धर्मेण च द्रविणमूर्जितमर्जयन्ति । धर्मेण कामसुखमत्र लभन्त एव, धर्मेण मुक्तिमपि यान्ति जना क्रमेण ॥ २३ ॥ श्रीधर्मो दययैकधा निजगदे ज्ञानक्रियाभ्यां द्विधा, ज्ञानाद्यैस्त्रिविधश्चतुर्विधतया ख्यातो व्रतैः पञ्चधा । षोढाऽऽवश्यकपालनेन नयतः सप्ताप्यथा मातृभिः, सत्तत्त्वैर्नवधा गुणैर्दशविधः क्षान्त्यादिभिर्विश्रुतः ॥ २४ ॥ लक्ष्मीकल्पलतायाः, भोगः कुसुमं फलं पुनर्दानम् । तस्माद्भवति हि जन्तोः, पुण्यं तद्भद्रबीजमिह ॥ २५ ॥ इत्याकर्ण्य मुनेर्वाणीं, स प्रणम्य व्यजिज्ञपत् । केनायं भगवन् ! धर्मः, प्रणीतः परमः सुहृत् ? ॥ २६ ॥ मुनिराह महाभाग !, धर्मोऽयं हितहेतवे । अर्हद्भिः केवलज्ञानशालिभिः समुदीरितः ॥ २७ ॥ श्रुत्वेति श्रेष्ठिनाऽऽख्यायि, धर्मतीर्थकृता भुवि । पुण्येन केन हे स्वामिन्नर्हता पदमाप्यते ? ॥ २८ ॥ तमाख्यत्स मुनिस्तीर्थकृत्पदं लभ्यते नरैः । अर्हद्भक्त्यादिभिः श्रेष्ठिन् !, विंशत्या हेतुभिः शुभैः ॥ २९ ॥ तृतीयेऽथ पदे तेषु, सङ्घभक्तिर्गरीयसी । विवेकिना विधीयेत, निश्छद्माशयपूर्वकम् ॥ ३० ॥ यतः— गुणानामिह सर्वेषां, रत्नानामिव रोहणः । श्रीमान् श्रमणसङ्घोऽयमाधारः परमो भुवि ॥ ३१ ॥ अर्हन्नपि वदत्युच्चैः, केवलज्ञानवानपि । नमस्तीर्थाय विश्वेषां, समक्षं भक्तिपूर्वकम् ॥ ३२ ॥ एकतः सर्वकार्याणि, सङ्घवात्सल्यमन्यतः । एकतोऽखिलतीर्थानि, पुण्डरीकाद्रिरन्यतः ॥ ३३ ॥ कुर्वन् विशालदत्ताख्यः, श्रेष्ठी सुश्राद्धगौरवम् । तस्मिन्नेव भवे चिन्तारत्नं लेभेऽद्रिदैवतः ॥ ३४ ॥

स्थान०

सर्वात्मना भवेच्छुद्धं, यस्य श्रीसङ्घगौरवम् । तस्य सम्यक्त्वनैर्मल्यं, भवेदर्हत्पदप्रदम् ॥ ३५ ॥ †भूसिज्जइ सम्मत्तं, तह जिणमयभत्तिरायरयणेण । जह तित्थयरसिरीवि हु, सम्मत्तधरं नरं वरइ ॥ ३६ ॥ इक्कु(त्तु)च्चिय पुव्वभवे, जिणपवयणनिविडभत्तिराएणं । पत्तं तित्थयरत्तं, सिरिसंभवतित्थनाहेणं ॥ ३७ ॥ इत्याकर्ण्य प्रवचनगरीयस्त्वं विशेषतः । तृतीयं स्थानकं तेन, प्रपेदे गुरुसन्निधौ ॥ ३८ ॥ ततोऽसौ परया भक्त्या, महर्षेस्तस्य पारणम् । कारयित्वा स्वयं शुद्धैरन्नाद्यैः समयोचितैः ॥ ३९ ॥ क्रमेण स्वगृहं प्राप्य, प्रीणिताशेषसज्जनम् । आरराध यथाशक्ति, सङ्घभक्तिपदं तथा ॥ ४० ॥ चतुर्विधस्य सङ्घस्य, विदधे विदितागमैः । वात्सल्यं प्रत्यहं श्रेष्ठी, नानायुक्ति यथोचितम् ॥ ४१ ॥ तपस्विग्लानबालादिमुनीनां स विशेषतः । कल्प्यैराहारैर्वसतिवस्त्रपात्रौषधादिभिः ॥ ४२ ॥ यतः—§संघे तित्थयरंमि य, सूरीसरसीसगणमहग्घेसु । जेसिं चिय बहुमाणो, तेसिं चिय दंसणं सुद्धं ॥ ४३ ॥ मूर्खाः कुटुम्बं पुष्णन्ति, भोज्यैर्दौर्गत्यकृद्धरैः । विवेकिनः प्रवचनं, पुनर्दौर्गत्यनाशनम् ॥ ४४ ॥ स्वदेहं रङ्कवद्भोज्यरहश्चिन्वन्ति बालिशाः । बुद्धाः प्रवचनं स्वर्गापवर्गसुखदं पुनः ॥ ४५ ॥ कुपात्रेषु धनं न्यस्तं, कुपथ्याहारवन्नृणाम् । सुखाभासं मुखे पुष्णत्, परिणामे न सुन्दरम् ॥ ४६ ॥ यैः श्रीश्रमणसङ्घस्य, वात्सल्यं निर्ममेऽनवम् । बभूव संपदा साकं, तेषां जन्म



† भूष्यते सम्यक्त्वं तथा जिनमतभक्तिरागरञ्जनेन । यथा तीर्थकरश्रीरपि च सम्यक्त्वधरं नरं वृणुते ॥ ३६ ॥
एकेनैव पूर्वभवे जिनप्रवचननिविडभक्तिरागेण । प्राप्तं तीर्थकरत्वं श्रीशम्भवतीर्थनाथेन ॥ ३७ ॥
§ सङ्घे तीर्थकरे च सूरीश्वरशिष्यगणरात्निकेषु । येषामेव बहुमानस्तेषामेव दर्शनं शुद्धम् ॥ ४३ ॥ १ विधुतागमः प्र० ।

प्लेग्रहि ॥ ४७ ॥ शृण्वन्निति फलं पात्रदानस्य गुरुसन्निधौ । श्रीमत्प्रवचने भक्तिं, श्रेष्ठी चक्रे निरन्तरम् ॥ ४८ ॥ अथ रत्नावली रत्नामृतप्रीतचेतसः । राज्ञः श्रेष्ठिपदं प्राप्य, जिनदत्तः पुरे महत् ॥ ४९ ॥ चकारोद्घोषणापूर्वमाहूय निजवेश्मनि । सम्यग्दृष्टिजनश्रेणिं, दुरिताशं सगौरवम् ॥ ५० ॥ युग्मम् उच्चैर्मानं गतोऽप्येष, प्रसादात्पृथिवीभुजः । न मानं विदधे क्वापि, लक्ष्मीभाग्यकुलोद्भवम् ॥ ५१ ॥ व्यवहारविशुद्धश्रीर्विधिवद्दाननिर्मलः । निरीहं निरहङ्कारमर्हदाज्ञैकतत्परः ॥ ५२ ॥ अन्तःसभं दिवः स्वामी, प्रशशंस तमन्यदा । अहो धन्याग्रणीः श्रेष्ठी, जिनदत्तः सदुत्तमः ॥ ५३ ॥ भक्तिः शक्त्यनुसारेण, यस्य प्रवचनेऽधुना । निर्व्याजं हृदि जागर्त्ति, सम्यग्मार्गानुसारिणी ॥ ५४ ॥ युग्मं । असहिष्णुर्गिरं तस्य, त्रिदशो रत्नशेखरः । छद्मना श्रावकीभूय, तत्रागात्तं परीक्षितुम् ॥ ५५ ॥ गृहागतं तमालोक्य, श्रावकं श्रावकाग्रणीः । वन्दित्वाऽवग् महाभाग !, किमर्थं त्वमिहागमः ? ॥ ५६ ॥ सोऽवादीद्भवतः श्रुत्वा, भक्तिं प्रवचनेऽनवाम् । कुटुम्बप्रेरितोऽत्यर्थं, सम्यग्दृष्टिरणुव्रती ॥ ५७ ॥ एकावलीमहाहारं, दुःखवातापहारकम् । अहमागां कृपाम्भोधे !, प्रार्थयितुं त्वदन्तिके ॥ ५८ ॥ न भवान् प्रार्थनाभङ्गं, विधाता कस्यचित्पुनः । तेनार्थित्वं प्रपन्नोऽस्मि, प्रति त्वां स्वप्रियागिरा ॥ ५९ ॥ यतः——किं न कुर्यान्नरः प्राज्ञः, प्रियया प्रेरितोऽधिकम् । मन्थाः सुवंशजातोऽपि, मथ्नाति स्नेहलं दधि ॥ ६० ॥ श्रुत्वेति मुदितस्वान्तः, श्रेष्ठी सद्दृष्टिकामधुक् । तस्मै तमार्पयद्वेगादहो आर्हतगौरवम् ॥ ६१ ॥ तस्यौदार्यं तदालोक्य, स नाकी विस्मितोऽधिकम् । पुष्पवृष्टिं सृजन् शीर्षे, साक्षाद्भूतः स्तुतिं जगौ ॥ ६२ ॥ धन्यस्त्वं सुकृतिव्रातावतंसो जिनशासने । यस्य प्रवचने भक्तिरीदृशी तव चेतसि ॥ ६३ ॥ श्राद्धमात्रस्य सद्भतया, भवतैकावलिस्तिमाम् । ददता सत्यतां नीतो, नाकिनां परमेश्वरः ॥ ६४ ॥ श्रीमन्तः सन्ति सर्वत्र, विश्रुताः स्वीयसंपदा । न परं त्वादृशः कोऽपि,

सङ्घभक्तोऽरति साम्प्रतम् ॥ ६५ ॥ पूर्वं विमृश्य पात्रास्यान्यालोक्य च यथोचितम् । दत्ते दानं खलु प्रायो, न तच्चक्रे भवान् परम् ॥ ६६ ॥ तस्येति स्तुतिमासूत्र्य, दत्त्वा चिन्तामणिं पुनः । स देवस्त्रिदिवं प्रापदिन्द्रोक्तकथाख्यानपूर्वकम् ॥ ६७ ॥ चिन्तारत्नं तदासाद्य, जिनदत्तः सुधीस्ततः । सर्वेषां पूरयामास, सद्दृष्टीनां मनोरथान् ॥ ६८ ॥ अन्यदा श्रेष्ठिना तेन, पृष्टो रत्नप्रभो गुरुः । स्वां भवस्थितिमाचख्यौ, चतुर्ज्ञानवराग्रणीः ॥ ६९ ॥ आद्ये ग्रैवेयके देवो, भवान् भूत्वा महर्द्धिकः । विदेहे तीर्थकृल्लक्ष्मीं, प्राप्य मुक्तिं गमिष्यति ॥ ७० ॥ निशम्येति गुरोः पार्श्वे, सप्तक्षेत्रेषु संपदः । व्ययेन सफलीकृत्य, जिनदत्तः प्रियान्वितः ॥ ७१ ॥ तपस्यामाददेऽनेकमहेभ्यैरमितो वृतः । तादृशानां यतो जन्म, सर्वत्रोदयसंपदे ॥ ७२ ॥ स तत्रापि प्रवचने, भक्तिं निर्माय निर्मलाम् । विशुद्धाहारपानाद्यैः, प्राप्तैः कालोचितैः स्वयम् ॥ ७३ ॥ तीर्थकृत्पदवीं पुण्यां, वशीकृत्य शमी क्रमात् । आद्ये देवोऽनवद्यात्मा, श्रीमान् ग्रैवेयकेऽजनि ॥ ७४ ॥ युग्मं । ततश्च्युतो विदेहेषु, स भावी तीर्थनायकः । नामतो जगदानन्दी, जगदानन्दिरूपभृत् ॥ ७५ ॥ हारप्रभा च गणभृत्पदमासाद्य निर्मलम् । तस्यैव तीर्थनाथस्य, तीर्थे मुक्तिं गमिष्यति ॥ ७६ ॥ एवं तृतीयपदभक्तिफलप्रकाशं, वृत्तं निशम्य जिनदत्तमहार्हतस्य । भक्तिं दृढां प्रवचने रचयन्तु हर्षाद्येनार्हतं पदमदम्भतया भवेद्वः ॥७७॥

## इति श्रीविंशतिस्थानकाधिकारे श्रीजिनदत्तपरमार्हतस्य तृतीयस्थाने कथानकं संपूर्णम् ॥



अथ चतुर्थस्थानके चतुर्थपुमर्थसाधनैकसाधनभूता सकलश्रेयोराजधानी निखिलसमग्रधर्मानुष्ठानजीवितरूपा निरवद्यविद्याप-

विघ्नमन्त्रसिद्धिबीजं श्रीगुरुभक्तिर्विवेकिना शुद्धाशयपूर्वं विधेया, यतः—×भत्तीइ जिणवराणं, खिज्जंती पुव्वसंचिया कम्मा। आयरियनमुक्कारेण, विज्जा मंता य सिज्झंति ॥ १ ॥ सापि द्रव्यभावाभ्यां द्वेधा, तत्र विशुद्धद्रव्यक्षेत्रकालोचितान्नपानपात्रवस्त्रकम्बलौपधवसतिदानादिना द्रव्यभक्तिः, एषाऽपि भावभक्तिहेतुतया महते सुकृतोदयाय धनसार्थवाहवज्जायते, भावभक्तिस्तु विधिवद्वन्दनप्रदक्षिणाद्वादशावर्त्तवन्दनप्रदानविश्रामणांह्रिप्रक्षालनत्रयस्त्रिंशदाशातनावर्जनषट्त्रिंशद्गुरुगुणानुभावनागुरूक्तक्रियासम्यक्पालनादिना, तथा नमो आयरियाणमिति पदस्य सहस्रशः स्मरणेन, सुवर्णवर्णषोडशार्हद्वन्दनपूजनतः, तथा '‡चउदस सया दुवन्ना, सव्वंके गणहरा वंदे' इत्यागमोक्तश्रीपुण्डरीकादिगणधरस्मरणादिना वा भवति। यतः—गुणैः षट्त्रिंशता युक्तस्याचार्यस्य महात्मनः। पञ्चधाऽऽचारपूतस्य, युगार्हागमवेदिनः ॥ २ ॥ वसत्यौषधवस्त्रादिदानैरञ्जलियोजनैः। वैयावृत्येन चित्तानुवृत्त्या वैनयिकेन च ॥ ३ ॥ प्रत्यक्षवत्परोक्षेऽपि, सद्गुणग्रामकीर्त्तनैः। समीपात्यजनैराज्ञाऽऽराधनैः कार्यसाधनैः ॥ ४ ॥ विपत्सु. प्राणदानेन, बहुमानोपदर्शनैः। वात्सल्यं सुधिया कार्यं, पुरुषोत्तमभूपवत् ॥ ५ ॥ चतुर्भिः कलापकं। तथाहि—अत्रैव भरतक्षेत्रे, ख्यातिं तन्वति भारतीम्। पद्मावतीति प्रासीज्जन्मभूमिरिव श्रियः ॥ ६ ॥ तस्यां विश्वम्भराभारधुरन्धरभुजोऽजनि। अच्युतस्थितिमातन्वन्, भूपतिः पुरुषोत्तमः ॥ ७ ॥ विश्वं गुणमयं तन्वन्, त्रिश्वगैरात्मनो गुणैः। द्रव्याश्रयी गुण इति, ख्यातिं यो निर्ममे वृथा ॥ ८ ॥ अन्वयेनापि नाम्नाऽपि, सुमतिस्तस्य धीसखः। धर्मस्येव विवेकोऽभूत्, सद्विचारमनोहरः ॥ ९ ॥ आजन्म सद्गुरोर्योगात्तत्त्वातत्त्वावबोधतः।

× भक्त्या जिनवराणा क्षीयन्ते पूर्वसंचितानि कर्माणि। आचार्यनमस्कारेण, विद्या मन्त्राश्च सिध्यन्ति ॥ १ ॥

‡ चतुर्दश शतानि द्विपञ्चाशतं च सर्वाङ्केन गणधरान् वन्दे।

अभूतामर्हतो धर्मे, राजा मन्त्री च निश्चलौ ॥ ९ ॥ अन्यदाऽभ्यर्च्य सर्वज्ञप्रतिमां भक्तिनिर्भरम् । सिंहासनमलङ्कृत्य, विशामीशो न्यवीविशत् ॥ १० ॥ नृदेवं तं नमस्कृत्य, श्रेष्ठिसामन्तमन्त्रिणः । पर्षदं पूरयामासुः, स्वस्वस्थाननिवासिनः ॥ ११ ॥ तस्मिन्नवसरे तत्र, विद्याविकटविग्रहः । कपाली रुद्रनामाऽऽगात्, कूटकोटिनिकेतनम् ॥ १२ ॥ तमाशीर्वचसाऽऽनन्द्य, योगी नृपमुपाविशत् । राजाऽपि तोषयामास, तं श्रेयोवार्तया पुनः ॥ १३ ॥ जगौ योगी महाराज !, त्वयि राज्ञि हि राजति । श्रेयांसि कुमुदानीव, विजृम्भन्ति निरन्तरम् ॥ १४ ॥ राजाऽऽख्यद्भवतो योगिन् !, निःस्पृहैकशिरोमणेः । आगतिर्निकषा भूपमभवत्किंप्रयोजना ? ॥ १५ ॥ सोऽवग् नरेन्द्र ! षण्मासी, विद्यां साधयतो मम । पूर्वसेवाविधानेन, निर्विघ्नाऽभूदतः परम् ॥१६॥ अपेक्षतेऽधुना तस्याः, सिद्धिरुत्तरसाधकम् । मेदिन्यां धान्यनिष्पत्तिर्यथा सत्पवनोदयम् ॥ १७ ॥ युग्मं ॥ विश्वोपकारधौरेयस्ततो दाक्षिण्यदीक्षितः । भव त्वं नृपते ! विद्यासिद्धिसांनिध्यदायकः ॥ १८ ॥ राजन् ! मिथ्यादृशां सङ्गो, नायतौ गुणहेतवे । सम्यग्दृशां भवेन्नूनं, सम्यक्त्वव्रतदूषणात् ॥ १९ ॥ मन्त्रिणेत्युच्यमानोऽपि, दाक्षिण्येन नरेश्वरः । वचनं योगिनस्तस्य, तत्त्ववेत्ताऽप्यमन्यत ॥ २० ॥ ततः कपालिना तेन, साकं भूपाकशासनः । असिपाणिर्निशि प्रापदेकाकी प्रेतकानने ॥ २१ ॥ समग्रहोमसामग्रीं, कृत्वा योगी जगौ नृपम् । एकं मृतकमानीहि, कुतश्चिद्वीरकुञ्जर ! ॥ २२ ॥ ततस्तद्वचसा राजा, पुरीपरिसरे भ्रमन् । साहसी तरुशाखाग्रालम्बि वीक्ष्य शवं क्वचित् ॥ २३ ॥ मण्डलाग्रेण तद्बन्धरज्जुं चिच्छेद तत्क्षणात् । नाधः पपात तद् भूमौ, कुतश्चित्कारणादहो ॥ २४ ॥ युग्मं ॥ त्रिरेवं भूभुजा छिन्ने, बन्धरज्जौ निजासिना । दिव्यानुभावतो नाधः, पतत्येतत्कथञ्चन ॥२५॥ ततोऽसौ तरुमारुह्योत्तारयेद्यावदात्मना । सत्पुण्योदयतोऽवादीत्तं तावत्कुलदेवता ॥ २६ ॥-भवन्तं जगदाधारं, हत्वा दुष्टतमाशयः ।

॥ १६ ॥

साधयिष्यति योग्येष, गाङ्गेयपुरुषं नृप ! ॥ २७ ॥ सावधानतया तेन, भाव्यं नृप ! त्वयाऽधिकम् । योगिभालस्थले धूमवर्णों-कारस्य जायतः ॥ २८ ॥ निशम्य तद्वचस्तथ्यं, सावधानमना भृशम् । गृहीत्वा मृतकं भूमान्, सन्निधौ योगिनो ययौ ॥२९॥ तत्पाणौ दक्षिणे खड्गं, निवेश्यार्चनपूर्वकम् । उपाविशदग्निकुण्डस्य, निकटे कपटे पटुः ॥ ३० ॥ अष्टोत्तरशतं विद्याजापं योगी विनिर्ममे । ध्यानलीनमना मौनी, करवीरादिहोमतः ॥ ३१ ॥ युग्मं ॥ अभ्यञ्जंस्तत्पदौ पद्ममृदुत्ता निजपाणिना । योगिभालेऽथ सोऽपश्य–द्धूमं श्यामलतेजसम् ॥ ३२ ॥ सस्मार देवतादेशादोंकारं वैरिवृन्दहम् । ध्यातवान् ध्याननिर्मीलचेतास्ताता भुवः स्थिरम् ॥ ३३ ॥ ॐकारस्फारमाहात्म्यात्, पूर्णे विद्याजपावधौ । शवोऽपि सहसोत्थाय, पश्चात्तत्र निपेतिवान् ॥ ३४ ॥ विघेन्यूनाङ्गतां ज्ञात्वा, योगी जापं पुनर्व्यधात् । तथैवोत्थाय तद्ध्यानाल्लुलोठोर्वीतले शवः ॥ ३५ ॥ एवं पुनः पुनः कुर्वन्, योगी राजजिघांसया । विद्यादेवतयाऽक्षेपि, कुण्डमध्ये विभावसौ ॥ ३६ ॥ स मृत्वाऽजनि गाङ्गेयपुमान् भूपशुभोदयात् । परद्रोही हि किं क्वापि, स्वार्थसिद्धिमवाप्नुयात् ? ॥३७॥ यतः—द्रुह्यन्ति ये महात्मभ्यो, द्रुह्यन्त्यात्मन एव ते । सूर्येन्दुद्रोहकृद्राहुः, शीर्षशेषोऽभवन्न किम् ? ॥ ३८ ॥ ततो हर्षविषादाभ्यामान्वितः काश्यपीपतिः । अहो विद्यानुभावोऽयमिति स्वान्ते व्यचिन्तयत् ॥३९॥ तं निधाय क्वचिद् गुप्तस्थाने रैपुरुषं नृपः । आगत्य धवलागारे, लेभे निद्रासुखं क्षणम् ॥४०॥ युग्मं ॥ मन्त्रिणः प्रातराख्याय, वृत्तान्तं तं यथास्थितम् । स्वगेहमन्यानयामास, नरेन्द्रः काञ्चनं नरम् ॥ ४१ ॥ वसुधां वसुधाधीशो, वसुधारामिवर्षणैः । सर्वतः शीतलां चक्रे, तृष्णातापापहैस्ततः ॥ ४२ ॥ काञ्चनप्रतिमावन्ति, जैनचैत्यानि निर्ममे । निर्ममेशमतोक्तेषु, कृत्येषु निरतो नृपः ॥ ४३ ॥ उपोषितश्चलदर्दर्यां, पुण्यसार्पपविनद्धत् । सुखसुप्तोऽन्यदा भूमानद्राक्षीत्स्वप्नमीदृशम् ॥ ४४ ॥ कस्याश्चित्पुरि विख्यातं, कलाकौशल-

लीलया । वर्त्तते बकुलीरत्नादेव्याख्यं तापसीद्वयम् ॥ ४५ ॥ तत्समीपे नृपस्यैका, कन्या विज्ञानशालिनी । शास्त्रपाठोद्यता रूपाद्भुताऽस्ति प्रतिभान्विता ॥ ४६ ॥ पाणौ करोति यो जाग्रदुग्रभाग्योदयेन ताम् । धर्मार्थकामास्तस्यैव, भवन्ति भुवनाद्भुताः ॥ ४७ ॥ त्रिभिर्विशेषकं ॥ ततः प्रबुद्धो मन्त्रीशं, समाहूय नृपोऽलपत् । समग्रं स्वप्नवृत्तान्तं, तत्पाणिग्रहणोत्सुकः ॥ ४८ ॥ मन्त्री कर्णातिथीकृत्य, भूभृतोक्तं ततोऽब्रवीत् । कः प्रत्ययः प्रभो ! स्वप्नप्राप्ते वस्तुनि धीमताम् ॥ ४९ ॥ वातपित्तकफोद्रेकचिन्तास्वप्नो हि निष्फलः । मूर्खतापसवृत्तान्तमनार्थे शृणु भूपते ! ॥ ५० ॥ धनपुराभिधे ग्रामेऽभिरामे ग्राम्यसंपदा । तपस्वी तापसः कश्चित्, पशुमेढ़ाह्वयोऽभवत् ॥ ५१ ॥ मठापवरकः सिंहकेसरैर्मोदकैर्भृतः । स्वप्ने तेनान्यदाऽदर्शि, तादृक् चिन्तातुरात्मना ॥ ५२ ॥ हृष्टोऽसौ प्रातरुत्थाय, सच्छायवदनाम्बुजः । कुलालादिषु शिष्येषु, मूर्खमुख्येषु तज्जगौ ॥ ५३ ॥ तैश्चाथ तद्विचारेण, भोजनाय जनावली । ग्रामीणाऽऽकारिता वेगान्मठं प्राप्ताऽब्रवीदिति ॥ ५४ ॥ तपोधना जनाः सर्वे, प्राप्ता एते भवन्मठे । परं भोजनसामग्री, न मनागपि दृश्यते ॥ ५५ ॥ जगुस्ते गुरुणाऽस्माकं, मठोऽयं मोदकैर्भृतः । स्वप्नेऽदर्शि ततोऽस्माभिस्तैर्वो भक्तिः करिष्यते ॥ ५६ ॥ निशम्येति गिरं तेषां, ग्रामीणास्ते परस्परम् । कुर्वन्तो हास्यमायाता, निजं धाम बुभुक्षिताः ॥ ५७ ॥ एवं स्वप्नोपलब्धार्थे, सत्यासत्यत्वसंशये । मन्त्रिणोक्तोऽपि भूनेता, न मुञ्चति तदाग्रहम् ॥ ५८ ॥ स्वप्नदृष्टार्थसंवादितापसीद्वयसन्निधौ । पठन्त्या नृपकन्याया, दिव्यरूपेण मण्डितम् ॥ ५९ ॥ नानाविदेशजश्रेणिभोजनाय नृपाज्ञया । पुरीपरिसरे मन्त्री, सत्रागारं ततो व्यधात् ॥ ६० ॥ युग्मं ॥ भोज्यन्ते विविधैर्भोज्यैः, पान्थास्तत्र दिने दिने । श्रूयते मन्त्रिणा तेभ्यो, देशोदन्ता नवा नवाः ॥ ६१ ॥ दूरदेशागतौ पान्थौ, श्लथकन्थासमन्वितौ । अन्येद्युर्मन्त्रिणा वीक्ष्य, भुञ्जानौ

॥१७॥

साश्रुलोचनौ ॥६२॥ जगदावे कुतो हेतोर्भवतोः साश्रुनेत्रता ?। दृश्यते कुर्वतोः स्वादु, भोजनं गौरवोज्ज्वलम् ॥६३॥ युग्मम् ॥ तावूचतुर्महामन्त्रिन्नेतच्चित्रविलोकनात् । अस्मत्पुरी समायासीत्साम्प्रतं स्मरणाध्वनि ॥ ६४ ॥ तेनावयोः स्वबन्धूनां, तत्स्थान- स्मरणादभूत् । तद्वियोगार्त्तिसंसर्गान्नेत्रयोरश्रुपानता ॥ ६४ ॥ युग्मम् ॥ अथ तौ सचिवः स्माह, भवत्पुर्यां किमद्भुतम् । तस्यामस्तीति तौ श्रुत्वा, वदतः स्म समादृतौ ॥ ६५ ॥ अस्त्युत्तरस्यां विख्याताऽसंख्यातगुणशालिनी । पुरी प्रियङ्करीनाम, धाम धर्मनय- स्थितेः ॥ ६६ ॥ यस्याः पुरो महामात्य !, पुरी पौरन्दरी ध्रुवम् । स्वान्ते सुमनसां शश्वद्दरीव प्रतिभासते ॥ ६७ ॥ मही- पाल इति ख्यातो, महीपालनलालसः । साम्राज्यं कुरुते तस्यां, यथा दिवि दिवस्पतिः ॥ ६८ ॥ विश्वाद्भुताङ्गसौन्दर्या, पद्म- श्रीस्तस्य नन्दिनी । अस्त्युन्मादपदं यूनामनूना गुणसंपदा ॥ ६९ ॥ अधीत्याखिलशास्त्राणि, तापसीद्वयसन्निधौ । वाग्वादिनीव विख्याता, याऽजनि त्रिजगत्यपि ॥ ७० ॥ श्रुत्वेति धीसखः स्वर्णदानेनानन्द्य तौ ततः । तत्स्वरूपं नृपस्याग्रे, मुदितात्मा व्यजिज्ञपत् ॥ ७१ ॥ निशम्य पान्थवृत्तान्तं, नितान्तं कौतुकाकुलः । ततो राज्यधुरं गुर्वीं, तस्मिन् विन्यस्य मन्त्रिणि ॥७२॥ स्वमोपलम्भं मन्वानः, समयकन्यादिदृक्षया । उदीच्यां प्रस्थितः स्वामी, स्थिरायां मण्डलाग्रवान् ॥ ७३ ॥ युग्मं ॥ स्थावरेतर- तीर्थानि, नमस्कुर्वन्नरग्रणीः । पुरीं प्रियङ्करीं प्रापत्, क्ष्मात्मीतिकरीं नृणाम् ॥ ७४ ॥ तत्रोद्याने सुरागारे, नृपतिर्मणिनिर्मिते । कन्यारत्नं तदालोक्य, तापसीद्वयसन्निधौ ॥ ७५ ॥ किमिदं जगदानन्दिपुण्यलावण्यसंपदः । निधानं कामभूभर्तुर्मुदितात्मा व्यचि- न्तयत् ॥ ७६ ॥ युग्मं ॥ ताभ्यां समं विनिर्माय, निर्माय शास्त्रसंकथाम् । तस्यां नरेन्द्रकन्यायां, गतायां निजवेश्मनि ॥ ७७ ॥ पुष्पपाणिर्नमस्कृत्य, विनयी तापसीद्वयम् । उपाविशद्विशामीशस्तदग्रे वशिनां गुरुः ॥ ७८ ॥ तं वीक्ष्य स्पृहणी-

याङ्गं, गाङ्गनीरमिवामलम् । तापस्यावूचतुर्वत्स !, कुतोऽत्र त्वमिहागमः ? ॥ ७९ ॥ कुसुमैरसमामोदैः, सप्रमोदमना नृपः । अभ्यर्च्य चरणाम्भोजं, तयोरेवं न्यवेदयत् ॥ ८० ॥ पद्मावत्या अहं पुर्याः, पृथिव्यालोककौतुकी । भवत्पदाम्बुजद्वन्द्वं, नन्तुमनागतोऽस्म्यहम् ॥ ८१ ॥ नूनं महानुभावोऽयमिति निध्याय ते उभे । सुभोज्यैश्चक्रतुस्तस्य, वात्सल्यं विद्ययाऽऽहृतैः ॥ ८२ ॥ भोजनानन्तरं तत्रोद्याने छायातरूवृते । सुष्वाप भूपती रत्नपट्टिकायां तयोर्गिरा ॥ ८३ ॥ अथ विद्याधरस्तत्र, कश्चित्क्रीडार्थमागतः । निद्रायमाणमुर्वीशं, सौन्दर्यजितमन्मथम् ॥ ८४ ॥ दृष्ट्वैतद्रूपसौन्दर्यं, निजस्त्री मोहसंभवम् । मा कार्षीदौषधीवल्याद्, युवतीं कृतवान्नृपम् ॥ ८५ ॥ युग्मं ॥ तत्कान्ता कान्ततां तस्य, वीक्ष्य विश्वातिशायिनीम् । संभाव्य च तदालोकात्, स्वकान्ते मोहमूढताम् ॥ ८६ ॥ औषधीवलयेनाशु, तां पुमांसं पुनर्व्यधात् । पुण्याश्रयो यतः प्राणी, भवेत्सर्वत्र सौख्यभाक् ॥ ८७ ॥ युग्मं ॥ मुक्तनिद्रो नरेन्द्रोऽय, निजयोः पाणिपद्मयोः । औषधीवलयद्वन्द्वं, बद्धं दृष्ट्वा सविस्मयः ॥ ८८ ॥ पुंरूपवलयं दैवात्, पृथक् चक्रे स्वपाणितः । आत्मानं वनिताकारं, दृष्ट्वा चागात्स विस्मयम् ॥ ८९ ॥ ततो द्वितीयं तत्काण्डं, वामहस्तात् पृथग् व्यधात् । निजात्मरूपमासाद्य, सुमुदे च महीपतिः ॥ ९० ॥ युग्मं ॥ ततस्तदौषधीयुग्मं, संस्थाप्य क्वापि भूपतिः । आयासीत्तापसीपार्श्वे, सायं विश्रामकाम्यया ॥ ९१ ॥ त्रैलोक्याद्भुतसौभाग्यां, वीक्ष्य तस्याकृतिं तदा । तापस्यावूचतुर्वत्स !, कोऽपि त्वमसि भूपतिः ॥ ९२ ॥ सोऽवक् पद्मावतीपुर्याः, शास्ताऽस्मि पुरुषोत्तमः । स्वभावानुसारतः प्राप्तं, द्रष्टुं राजसुतामिह ॥ ९३ ॥ परं पुण्योदयः कोऽपि, प्रादुरासीन्ममाधुना । भवत्योर्दर्शनं तत्र, येन संजातमस्तिहृत् ॥ ९४ ॥ तस्यां विज्ञाय भूजानिं, कन्यायामनुरागिणम् । तापसी रत्नदेव्याख्यत्, तमीषत्स्मितपूर्वकम् ॥ ९५ ॥ पुरुषद्वेषिणी राजन् !, राजकन्याऽस्ति सा पुनः । करग्रहं न कस्यापि, मन्यते मन्यु-

नाऽन्विता ॥ ९६ ॥ तत्कथं भवता भद्र !, जनमात्रेण सा कली । पाणौ करिष्यते शीघ्रं, दुर्ग्रहा श्रुसदामपि ॥ ९७ ॥ जजल्प जगतीनेता, भसत्या हे तपस्विनि ! । स्त्रीरूपेण करिष्यामि, तां वश्यां स्ववशामहम् ॥ ९८ ॥ ताभ्यामुक्तं कथं राजन् !, स्त्रीरूपं त्वं करिष्यसि ? । सोऽवर्वीदौषधी मेऽस्ति, नारीरूपविधायिनी ॥ ९९ ॥ ततस्तां दर्शयामास, तापस्योरौषधीं नृपः । तस्थौ तत्र तदादेशाद्रूपं कृत्वाऽथ योषित. ॥ १०० ॥ अथ प्रातः समायातां, तामालोक्य नृपात्मजा । स्वामिन्येषाऽस्ति का योषा ?, दत्तहर्षेत्यभाषत ॥ १ ॥ सोवाच तां मम भ्रातुस्तनयाऽसौ सुलोचना । नाम्ना पद्मावतीपुर्यां, मिलनार्थं समागमत् ॥ २ ॥ अगण्यपुण्यलावण्यां, तद्देहद्युतिसंपदम् । सा स्वनेत्रपुटैः पीत्वा, तापस्यौ विस्मिताऽवदत् ॥ ३ ॥ स्वामिन्येषा मनस्तुष्टिं, दत्ते दृष्टा ममाधिकम् । मत्पार्श्वे तिष्ठतां तस्मादेवमस्त्विति सा जगौ ॥ ४ ॥ तदादेशात्ततो राजा, तया सार्कं नृपालयम् । आयातः परमं प्रापप्रीत्व गुणगौरवात् ॥ ५ ॥ नानाग्रन्थकथाक्रीडासुधास्वादैकतृप्तयोः । क्षीरनीरोपमा प्रीतिस्तयोरासीत्परस्परम् ॥ ६ ॥ यत.— क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिला:, क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वाऽथ मित्रापदं, युक्तं तेन जलेन शाम्यति पुनर्मैत्री सतामीदृशी ॥ ७ ॥ व्याजहारान्यदा राजा, राजकन्या रहस्यदः । नरोपरि कथं द्वेषो ?, यौवनेऽप्यस्ति ते सखि ! ॥ ८ ॥ जामे ! सा स्माह मे जातिस्मृतेर्द्वेषोऽस्ति पूरुषे । राजाऽऽख्यते कुतः ! प्राच्यजन्मज्ञानमजायत ॥ ९ ॥ लज्जानम्राननाचख्यौ, सा ततस्तां मृदुध्वनिः । द्वन्द्वेभमिथुनं क्रीडामरमार्य प्राक्तनं भवम् ॥ १० ॥ तद्यथा हस्तिमिथुनं, विन्ध्याचलवनावनौ । अन्योऽन्यं निविडस्नेहमन्यदं समभूत्किल ॥ ११ ॥ तत्रान्यदा स्फुरज्ज्वालाकराले वनपावके । जाते प्रत्यूपरक्षेत्रं, तत्प्रापद्भीतिविह्वलम् ॥ १२ ॥ तद्वीक्ष्य शूकरव्यालमृगादिप्राणि-

मिर्भूतम् । जीवानुकम्पया, त्यक्त्वा, तद्गतं द्रुतमन्यतः ॥ १३ ॥ भयातुरः करी मुक्त्वा, ततः कान्तां क्वचिद्गतः । आगतायां मृतौ जन्तोः, कः कस्य स्यात् किल प्रियः ? ॥ १४ ॥ वज्रं पततु शीर्षेऽस्य, धातुर्यस्तादृशेष्वपि । पुंस्त्वं विधत्ते स्वप्राण-कृते मुञ्चन्ति ये प्रियाम् ॥ १५ ॥ इति ध्यात्वा स्वयं स्वान्ते, निःस्नेहा सा मृता सती । प्राणिनां कृपया जाता, सुताऽहं पृथिवीभुजः ॥ १६ ॥ ततो नान्यं समीहेऽहं, वरीतुं पुरुषं सखि ! । प्राच्यजन्मप्रियं त्यक्त्वा, समानसुकृतोदयम् ॥ १७ ॥ तत्स्वरूपं नृपः श्रुत्वा, स्मृत्वा च प्राग्भवं निजम् । चिन्तामेवं दधौ स्वान्ते, कष्ट रे धर्मवैभवम् ? ॥ १८ ॥ अभूवं पुनरप्येवंविधः श्रीमानहं नृपः । यस्यानुभावतः प्राणित्राणामिप्रायजन्मतः ॥ १९ ॥ युग्मं ॥ कृपा निर्व्याजमायाता, यस्य जन्तुषु चेद् हृदि । बोधिलाभस्तदा भावी, तस्यावश्यं भवान्तरे ॥ २० ॥ यतः–महतामपि दानानां, कालेन क्षीयते फलम् । भीताभयप्रदानस्य, क्षय एव न विद्यते ॥ २१ ॥ स्वाकारगोपनं कृत्वा, भुवो गोप्ता ततोऽखिलम् । तापस्योः कथयामास, वृत्तान्तं कन्ययोदितम् ॥ २२ ॥ सस्नेहं हस्तिना हस्तदण्डेन शीतलाम्बुना । हस्तिनीं सिच्यमानाङ्गीं, पतिभक्तितरङ्गिताम् ॥ २३ ॥ लिखित्वा तापसी, चित्रपट्टिकाया पुरेऽखिले । दर्शयामास सर्वेषामासपुंसा विवेकिना ॥ २४ ॥ युग्मं ॥ क्रमेण नृपतेः पुत्री, तां दृष्ट्वा चित्रपट्टिकाम् । किमस्त्येतन्महाभागेत्यवोचत्तं सविस्मया ॥ २५ ॥ सोवाच तामसौ पद्मावतीपुर्या अधीश्वरः । सोमान्वयी कृपाम्भोधिर्नृपः श्रीपुरुषोत्तमः ॥ २६ ॥ अयं प्राच्यभवे हस्ती, जातो विन्ध्याचलावनौ । दग्धो दवाग्निना प्राप्य, मृत्युमन्याङ्गिरक्षणात् ॥ २७ ॥ नरेन्द्रपदवीं प्राप्तो, जातजातिस्मृतिः पुनः । इदं चित्रं विनिर्माय, ज्ञातुं प्राच्यप्रियां वशाम् ॥ २८ ॥ समानसुकृतारम्भनिर्दम्भगुणशालिनीम् । पृथिव्यां दर्शयामास, सार्धं मम पाणिना ॥ २९ ॥ त्रिभिर्विशेषकं । अथ नेत्रपुटैः पीत्वा, सा तद्रूपसु-

घारसम् । गलत्सर्वाङ्गसंतापा, सत्वरं तं बुबुधेति ॥ ३० ॥ तत्स्वरूपं पिता तस्या, विज्ञाय प्रीतिमन्मनाः । निर्मापोद्वाहसामग्रीं, समग्रां स्वर्गसन्निभाम् ॥ ३१ ॥ समं स्वमन्त्रिराजेन, परिवारपुरस्कृताम् । तां सुतां प्रेषयामास, प्रति पद्मावतीं पुरीम् ॥ ३२ ॥ ॥ युग्मं ॥ सा प्रणम्य पितुः पादाम्भोजं गन्तुं समुत्सुका । इति शिक्षाश्रयीचक्रे, प्रभुणा हितहेतवे ॥ ३३ ॥ कुर्याः प्रमादं मा धर्मे, तस्मिन् पुत्रि ! गुणाधिके । दत्ते भव्येषु यो मुक्तिं, जीवाकृष्टिं विनाद्भुतम् ॥ ३४ ॥ प्राणेभ्योऽप्यधिकं शीलं, पालनीयं प्रयत्नतः । शीलमुक्तो यतो दुःखं, लभतेऽङ्गी भवे भवे ॥ ३५ ॥ भर्तुः प्रसादमासाद्य, गर्वः सर्वगुणापहः । न विधेयः कदाप्युच्चैः, पज्यपजाव्यतिक्रमात् ॥ ३६ ॥ ततोऽसौ तापसीयुग्मं, भक्तिपूजापुरस्सरम् । अभिवन्द्याचलद्राजाऽऽदेशतस्तां पुरीं प्रति ॥ ३७ ॥ तया समं नरेन्द्रोऽपि, तादृग्वेषविभूषितः । प्रीतिमान् कार्यसंसिद्धया, तापस्यादेशतोऽचलत् ॥ ३८ ॥ कथाविनोदं तन्वाना, स्त्रीरूपोर्वीभुजा समम् । क्रमात्पद्मावतीपुर्यां, सा प्रापत्सपरिच्छदा ॥ ३९ ॥ अवद्यमिव योगीन्द्रः, स्त्रीत्वं हित्वा ततो नृपः । सायं प्रापन्निजं धाम, लब्धलक्षगणाग्रणीः ॥ ४० ॥ राजसौधागतं वीक्ष्य, राजानं कुशलेन तम् । आनन्दं परमं प्रापुः, श्रेष्ठिसामन्तमन्त्रिणः ॥ ४१ ॥ तदागमसुधास्वादप्रमोदोद्गमभेदुराः । प्रतिवेश्म व्यधुः पौरास्तदा तत्र महोत्सवान् ॥ ४२ ॥ ततो वृत्तान्तमाख्याय, राजा स्वं मन्त्रिणः पुरः । तस्याः सपरिवारायाः, भक्तिं भोज्यैरचीकरत् ॥ ४३ ॥ उपयेमे ततो भूमान्, महोत्सवमनोहरम् । पद्मश्रियं श्रियं साक्षात्, संपदा पुरुषोत्तमः ॥ ४४ ॥ पुनः पुरुषसिंहोऽभूत्, सिंहस्वप्नोपलम्भभृत् । तयोः क्रमेण सर्वाङ्गसुखसागरमग्नयोः ॥ ४५ ॥ तत्कजन्मोत्सवश्रेणिं, प्रीणिताखिलमार्गणाम् । स्वजनानन्दिनीं चक्रे, मुदितो मेदिनीपतिः ॥४६॥ पद्मश्रियः प्रमोदार्थं, पृथ्वीशो विषये निजे । विनिर्ममे दयादानं, निदानं सर्वसम्पदाम् ॥ ४७ ॥ यत्पुत्रेव देवीभिर्नन्दने

नृपनन्दनः । धात्रीभिः पञ्चभिः पाल्यमानो वृद्धिमवाप सः ॥ ४८ ॥ असौ राजसुता अष्टौ, विशिष्टगुणसंपदः । जनकादेशतः पाणौ, चकार नवयौवनः ॥ ४९ ॥ कालान्तरे महादाहज्वरार्त्ता नामशेषताम् । पद्मश्रीरगमत्कर्मपरतन्त्रं यतो जगत् ॥ ५० ॥ तद्वियोगविमूढात्मा, रोदिति प्रत्यहं नृपः । रङ्कवद्विपदं प्राप्तो, धीरः कोऽप्येव जायते ॥ ५१ ॥ तस्मिन्नवसरे तत्र, सर्वदेवमुनीश्वरः । चतुर्ज्ञानः समायासीत्, प्राणिश्रेणिशुभोदयात् ॥ ५२ ॥ पश्चाभिगमवान् राजा, तं नमस्कृत्य भक्तितः । शुश्राव देशनामेवं, भवक्लेशविनाशिनीम् ॥ ५३ ॥ मानुष्यार्यक्षेत्रदेशान्वयायुर्नीरोगत्वाचार्यबुद्ध्यादिसंपत् । संसारेऽस्मिन् मानवानां समग्रा, सामग्रीयं दुर्लभा धर्ममार्गे ॥ ५४ ॥ दुर्लभमिति मानुष्यं चतुरधिकाशीतियोनिलक्षेषु । भ्रमति हि यदेष जीवः प्रकटं कुलकोटिलक्षेषु ॥ ५५ ॥ प्रत्येकं क्षितितोयवह्निमरुतां कायेषु सप्तोदिताः, प्रत्येकाख्यवनस्पतौ दश चतुर्युक्ताश्च साधारणे । प्रत्येकं विकलेन्द्रियेषु युगले सप्ताहते ते नृणां, तिर्यग्नारकदेवयोनिगणना लक्षाचतुष्कं पृथक् ॥ ५६ ॥ अनन्तपुद्गलावर्त्तान्, भ्रमता प्राणिनाऽमुना । अनन्तशो भवाम्भोधौ, प्रत्येकं पूरिता अमूः ॥ ५७ ॥ भ्रमन्नेतासु संसारी, कथञ्चित्कर्मलाघवात् । चत्वारि परमाङ्गानि, नृजन्मादीनि लब्धवान् ॥ ५८ ॥ यतः—संप्राप्य दुर्लभतरं नरजन्म सारं, दानोपवासनिपरेषु मनो विधेयम् । यस्मादुपैति हत मृत्युरयं क्षणेन, यत्ने कृतेऽप्यसुमतां विविधैरुपायैः ॥ ५९ ॥ नानन्तेनापि कालेन, नृसुरासुरसंभवैः । तृप्तिर्भोगैर्भवेज्जन्तोर्नद्योघैरिव वारिधेः ॥ ६० ॥ यत्स्वतन्त्राभिमानस्य, सुखं तदपि किं सुखम् ? । स्वकर्मपरतन्त्रस्य, भोगतृष्णाकुलात्मनः ॥ ६१ ॥ सांसारिकमहादुःखविमोक्षोऽत्र तदा भवेत् । सम्यग्धर्मविधायित्वं, यदा स्याद्बोधिपूर्वकम् ॥ ६२ ॥ इत्यादिदेशनां श्रुत्वा, प्रबुद्धः पृथिवीपतिः । नत्वा विज्ञपयामास, श्रीगुरून् रचिताञ्जलिः ॥ ६३ ॥ दुःखत्रयमहा-

वर्त्ते, दोषनपमहोरगे । भत्र मे ममतो भर्त्तः !, कर्णधारो भवार्णवे ॥ ६४ ॥ ततो गुरुनिदेशेन, प्राप्त. संवेगवान् गृहम् । सप्त-क्षेत्रेषु निर्माय, वित्तव्ययमनेकधा ॥ ६५ ॥ न्यस्य राज्यधुरं ज्येष्ठपुत्रे सुत्रामविक्रमे । स समन्त्री गुरोः पार्श्वे, नृपो दीक्षामुपाददे ॥ ६६ ॥ तपस्यां पालयन्नेवं, स्थितः समितिगुप्तिषु । अनगारगुणश्रेणिं, बभार विनयाद् मुनाम् ॥ ६७ ॥ राजर्षिर्नव पूर्वाणि, बीजबुद्धिरधीतवान् । तपांस्यनेकधा षष्ठाष्टमादीनि व्यधात्पुनः ॥ ६८ ॥ अन्यदा स मुनिर्दध्यौ, धौतचेताः शमाम्बुभिः । गुरोर-प्रतिकार्यत्वमस्त्युपकारकोटिभिः ॥ ६९ ॥ यत.–दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोकेऽस्मिन् । तत्र गुरुरिहामुत्र च सुदुष्करतरप्रतीकारः ॥ ७० ॥ स गुरुः स पिता माता, स च चिन्तामणिः स्मृतः । यः शास्त्रोपायमाख्याय, नरकेभ्यः समुद्धरेत् ॥ ७१ ॥ इति ध्यायन् स्वयं साधु॰, सिन्धुः संवेगसंपदाम् । जग्राह गुरुवात्सल्याभिग्रहं दुर्ग्रहं परैः ॥ ७२ ॥ तद्यथा––त्रिविधं त्रिविधेनाशातनाः स त्रयस्त्रिंशतम् । पर्यहार्षीत्प्रमयत्नी॰, पुण्याब्धेः पुरुपोत्तमः ॥ ७३ ॥ भक्तपानौषधैर्वस्त्रैर्देशकालोचितैः शुभैः । स कल्पतरुवत्कल्प्यैर्गुरोर्वात्सल्यमातनोत् ॥७४॥ अङ्गमर्दकवच्चाङ्गं, स गुरोः समभर्दयत् । यथाऽवसरमुत्सर्गापवादज्ञोऽखिलं व्यधात् ॥७५॥ षट्त्रिंशतं गुरुगुणानन्त.स्वान्तं सदा स्मरन् । प्रत्यक्षेऽपि परोक्षेऽपि, चकाराचारसंस्तुतिम् ॥७६॥ एवं समाधिसिद्धान्तविधिनाऽऽज्ञा-विधानतः । तद्ध्यानलयलीनात्मा, कुर्वन्निरुद्ध्यहह्न् गुरोः ॥ ७७ ॥ राजर्षिरर्जयामास, तीर्थकृत्पदसंपदम् । यद्भक्तिः सद्गुरोः सर्व-धर्माणां जीवितं परम् ॥७८॥ युग्मम् । अत्रान्तरे गुरोर्भक्तिं, सुधर्माधिपतिः स्वयम् । अश्लाघिष्ट नरेन्द्रर्षेः,समाजे दनुजाद्विषाम् ॥७९॥ यथाऽत्र भरतक्षेत्रे, राजर्षिः पुरुषोत्तमः । धत्ते विश्वाद्भुतां चित्ते, गुरुभक्तिनदीशताम् ॥ ८० ॥ न तथा साम्प्रतं कोऽपि, निष्को-पहृदयोऽनिशम् । यथाशक्ति गुरौ भक्तिं, निर्व्याजां जनयत्यहो ॥८१॥ तदाकर्ण्य सुरः कश्चिदीर्ष्यालुर्जिनशासने । प्रवर्त्तमने

रूपं, निर्माय भुवमागतः ॥ ८२ ॥ नानापवाददोषादिकरणैः कटुभाषणैः । गुरुभक्तिरतस्वान्तं, निर्दम्भं तं पदे पदे ॥ ८३ ॥ निष्ठुरं तर्जयामास, जातिनिन्दनपूर्वकम् । न भावभङ्गस्तस्यासीन्न चाकुप्यत्स तं प्रति ॥ ८४ ॥ त्रिभिर्विशेषकं । ततः प्रदक्षिणीकृत्य, तं मुनिं प्रणिपत्य च । इन्द्रस्वरूपमाख्याय, स नाकी नाकमासदत् ॥ ८५ ॥ ततः श्रीगुरुवात्सल्याभिग्रहं परमं मुनिः । प्रतिज्ञाकोटिमारोप्य, निःस्पृहः शुद्धसंयमः ॥ ८६ ॥ सम्यक् श्रीगुरुराजेभ्यो, नमोऽस्त्वेवं पठन् सुधीः । मासानशनमाराध्य, देवोऽभूदच्युते महान् ॥ ८७ ॥ युग्मम् । ततश्च्युतो विदेहोर्व्यां, राजा श्रीपुरुषोत्तमः । भावी तीर्थकरः श्रीमान्, गुरुभक्तिप्रभावतः ॥ ८८ ॥ इति पुरुषोत्तमनरपतिचरितं श्रुत्वा सहर्षसुखवसतौ । यतितव्यं गुरुभक्तौ भवति यतस्तीर्थकरलक्ष्मीः ॥ ८९ ॥

## इति चतुर्थस्थानकोपरि गुरुभक्तिविषये नृपश्रीपुरुषोत्तमावनिनायकचरित्रं संपूर्णम् ॥

अथ पञ्चमस्थानके लौकिकलोकोत्तरभेदाभ्यां द्विविधेषु स्थविरेषु सर्वगुणश्रेणिप्राप्तिकारणं भक्तिर्विवेकिना विधेया, तत्राद्याः स्थविरा जनकजनन्यादयः, एतेष्वपि भक्तिर्लोकद्वयसुखावहत्वेन महते गुणोदयाय जायते, यतः–गुणवृद्धेषु वृद्धेषु, यो भक्तिं कुरुतेऽनघाम् । भवद्वयी भवेत्तस्य, सर्वदाऽपि सुखावहा ॥ १ ॥ मातृपित्रादिवृद्धानां, नमस्कारं करोति यः । तीर्थयात्राफलं तस्य, तत्कार्योऽसौ दिने दिने ॥ २ ॥ इति, लोकोत्तरवृद्धाश्च पञ्चमहाव्रतभूषिता निस्सङ्गचित्तवृत्तयो यतय एव परमार्थतः, यतः–तपःश्रुतधृतिध्यानविवेकव्रतसंयमैः । ये वृद्धास्तेऽत्र शस्यन्ते, न पुनः पलिताङ्कुरैः ॥ ३ ॥ श्रीभागवतेऽपि–महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता, विमन्यवः सुहृदः साधवो ये ॥ ४ ॥ ते

आचार्यादिभेदैः पञ्चधा, यतः-*आयरियउवज्झाए पवत्ति थेरे तहेव रायणिए । एएसिं किइकम्मं कायवं निज्जरट्ठाए ॥ ५ ॥
इति, तत्र सम्यक्संयमयोगेषु सीदतां बालग्लानादिसाधूनां यथार्हसाहाय्यदानेन स्थिरताविधायिनः स्थविरा भवन्ति. यतः-×थिरकरणा
पुण थेरे, पवत्तिवावारिएसु अत्थेसु । जो जत्थ सीदइ जई संतबलो तं थिरं कुणइ ॥ ६ ॥ तेषां विशुद्धान्नपानवस्त्रपात्रभे-
षजोपाश्रयादिदानविश्रामणपर्युपासनसंमुखागमनसंप्रेषणमार्गदर्शनाभ्युत्थानासनोपढौकनविनयाञ्जलिविधानद्वादशावर्त्तवन्दनसुखसंयमया-
त्रानिर्वाहपृच्छादिभिरनेकधा द्रव्यक्षेत्रकालाद्यौचित्येन विधीयमाना भक्तिर्नयसारस्येव सर्वश्रेयोनिबन्धनबोधिबीजलाभाय भवति,
यतः-वस्त्रं पात्रं भक्तपानं पवित्रं, स्थानं ज्ञानं भेषजं पुण्यहेतुः । ये यच्छन्ति स्वात्मभावैकसारं, ते सर्वाङ्गं सौख्यमासादयन्ति
॥ ७ ॥ तथा स्थविरभक्तये ' नमो लोए सव्वसाहूण ' मिति पदं श्रीमुनिसुव्रतश्रीनेमिध्यानेन सहस्रशः स्मरणीयं, सर्वार्हत्प-
रिवारसाधुवन्दनं साम्प्रतसमये महाविदेहप्रवर्त्तमानद्विकोटीमितोत्कृष्टकेवलज्ञानिद्विसहस्रकोटीमितोत्कृष्टसंयमधरसाधुवन्दनं विधेयं,
साधुगुणानामनुमोदना च तद्गुणप्राप्तये विधेया, साधुगुणास्त्वमी, यथा-+वयछक्कमिंदियाणं निग्गहो" भावकरणसच्चं च । ख-

---

* आचार्योपाध्यायाः प्रवर्त्तकः स्थविरस्तथैव रत्नाधिकः । एतेषां कृतिकर्म कर्त्तव्यं निर्जरार्थाय ॥ ५ ॥

× स्थिरकरणात्पुनः स्थविरः प्रवर्त्तकव्यापारितेष्वर्थेषु । यो यत्र सीदति यतिः सद्बलस्तं स्थिरीकरोति ॥ ६ ॥

\+ व्रतषट्कमिन्द्रियाणां निग्रहो भावकरणसत्यं च । क्षमा विरागताऽपि च मनआदीनां निरोधश्च ॥ ८ ॥

कायानां षट्कं योगे युक्तता वेदनाध्यासना । तथा मारणान्तिकाध्यासना चैतेऽनगारगुणाः ॥ ९ ॥

मयों विरागयावि यं, मणमाईणं निरोहो अ ॥ ८ ॥ कायाण छक्कं जोगंमि जुत्तयां वेयणाहिआसणयां । तह मारणंतियहि-
यासणा य पुणऽणगारगुणा ॥ ९ ॥ इति, तथा–पर्यायेण विंशत्यब्दा, वयसा षष्टिवार्षिकाः । श्रुतेन समवायाङ्गधराः स्युः
स्थविरास्त्रिधा ॥ १० ॥ स्थविराणां निर्भेदानां, तेषामन्नादिवस्तुभिः । वात्सल्यं भक्तिनिस्तुल्यं, कुर्वाणोऽङ्गी गुणो-
ज्ज्वलः ॥ ११ ॥ निर्धूय सहसा नीचैर्गोत्रकर्मोदितोदयम् । लभते तीर्थकृल्लक्ष्मीं, पद्मोत्तरनृपो यथा ॥ १२ ॥ युग्मम् ।
तथाहि—क्षेत्रेऽत्र भरते पुर्यां, वाराणस्यामजायत । वसुधाऽधीश्वरः पद्मोत्तरः सुकृतिमत्तरः ॥ १३ ॥ लावण्यामृतकूपाभे, यस्य
रूपे नतभ्रुवाम् । विश्रान्ताः परमानन्दं, दृशः प्रापुरिवाध्वगाः ॥ १४ ॥ न गजे नाङ्गजे यस्य, स्त्रियां नैव न च श्रियाम् ।
उपकारं विना स्वान्तं, नितान्तं क्वापि मोदते ॥ १५ ॥ इतः शुभनिधानायां, पुर्यां वर्यविभाऽर्यमा । जयोऽजनि जगज्ज्या-
यान्, न्यायधर्मगुणैर्नृपः ॥ १६ ॥ पद्मिनी पद्मिनीवासीत्, सुता तस्यालिशालिनी । अन्या कुमुदिनीनाम, धाम सौभाग्य-
संपदः ॥ १७ ॥ तथा गजपुरे सिंहरथस्य पृथिवीपतेः । आद्या भोगावती कन्या, परा विभ्रमवत्यभूत् ॥ १८ ॥ कन्या
एताश्चतस्रोऽपि, पद्मोत्तरनरेशितुः । वीक्ष्य चित्रपटे रूपं, लिखितं विश्वतोऽद्भुतम् ॥ १९ ॥ स्वयंवराः समायाताः, प्राचीन-
शुक्रतोदयात् । परिणीता नरेन्द्रेण, तेनोत्सवपुरस्सरम् ॥ २० ॥ युग्मं ॥ सपत्नीनामपि प्रीतिस्तासामासीत्परस्परम् । सोदरीणा-
मिव स्वान्ते, नान्यथा तु मनागपि ॥ २१ ॥ मैत्र्यादिभावनाभिः स्यात्, संयतस्य यथा धृतिः । तथा चतसृभिस्ताभिः, प्रियाभिः
पृथिवीभुजः ॥ २२ ॥ अन्यदा कोशलास्वामी, कामी सुग्रीवभूपतिः । तासां लीलायितं श्रुत्वा, भृशं सस्पृहमानसः ॥ २३ ॥
ताः कान्ताः कान्तिभिः कान्ताः, कुम्भीदूतेन याचते । पद्मोत्तरस्तु सत्तेजा, न दत्ते क्षत्रियोत्तमः ॥ २४ ॥ ततोऽन्योऽन्यं तपो-

रामीत्, प्रोद्योद्योधान्धनेत्रयोः । सुसदामपि दुर्लक्ष्यरतदर्य दारुणो रणः ॥ २५ ॥ परं पद्मोत्तरः कान्ताशीललीलानुभावतः । भटकोटीर्विनिर्जित्य, जयश्रियमशिश्रियत् ॥ २६ ॥ काममेव पुमर्थेषु, ततोऽविकलतया नृपः । सेवमानश्चिरं कालं, निन्ये तद्रूपमूढहृत् ॥२७॥ अथेन्द्रजालिको श्रद्दसिन्द्रशर्मा नरेश्वरम् । समीहते परं तस्मै, न दत्तेऽसौ स्वदर्शनम् ॥ २८ ॥ खड्गपाणिस्ततो भूत्वा, पुमान् पुण्यतमाकृतिः । दिव्यदिव्याङ्गनायुक्तः, स प्राप नृपसंसदम् ॥ २९ ॥ तमालोक्य नृपः प्राह, भद्र ! त्वमसि कः पुमान् ? । कान्येषा युवती रेखां, रूपेण स्त्रीषु बिभ्रती ॥ ३० ॥ केन प्रयोजनेनागात्राजसंसदि सम्प्रति । स प्राञ्जलीर्नमस्कृत्य, भूपमेवं न्यवेदयत् ॥ ३१ ॥ अहं विद्याधरस्वामी, राजन्नाम्ना मणिप्रभः । इयं सुलोचना मेऽस्ति, प्राणेभ्योऽपि प्रिया प्रिया ॥ ३२ ॥ लीलावनं विनोदेन, व्रजन्ती वैरिणा पुनः । हृताऽसौ वज्रनादेन, खेचरेण दुरात्मना ॥ ३३ ॥ समं संग्राममाधाय, तेनेयं वालिता मया । स ततो हन्तुमागच्छन्नस्ति मां प्रति कोपभृत् ॥ ३४ ॥ गतत्राणामिमां प्राणप्रियां मे रक्ष भूपते ! । यथा यामि समं तेन, विधातुं दारुणं रणम् ॥ ३५ ॥ यतः—शास्त्रं सुनिश्चितधिया परिचिन्तनीयं, स्वात्मीकृताऽपि युवतिः परिरक्षणीया । आराधितोऽपि नृपतिः परिशङ्कनीयः, शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ? ॥ ३६ ॥ इत्युक्त्वा नृपतेः पार्श्वे, तां मुक्त्वा सोऽगमत्क्षणात् । स पुनः रथापपाभास, स्वसारमिव वेश्मनि ॥ ३७ ॥ ततोऽङ्घ्रिप्रमुखा देहावयवाः खेचरेशितुः । निपेतुर्नभसस्तस्य, क्षणेन क्षोणिमण्डले ॥ ३८ ॥ तदङ्गावयवान् सर्वास्तानालोक्योपलक्ष्य च । पूत्कारं कुर्वती तीव्रं, तद्भार्या भूपमब्रवीत् ॥ ३९ ॥ प्रतीक्षां मतिप्रयस्यैते,

१ अगमत्

प्रभो ! सर्वेऽपि निश्चितम् । करिष्ये तदहं साकममीभिः काष्ठभक्षणम् ॥ ४० ॥ ततो नरेश्वरामात्यमुख्यानापृच्छय सा द्रुतम् । ज्वलद्वह्निप्रवेशेन, स्वात्मानं भस्मसाद्व्यधात् ॥ ४१ ॥ सविस्मयमना यावत्तस्थौ राजाऽऽसने स्थितः । तावत् स खेचरः प्राप्तो, याचते दयितां निजाम् ॥ ४२ ॥ सखेदं भूभुजाऽऽख्याते, तद्वृत्तान्ते यथास्थिते । आचख्यौ तीव्रदुःखार्त्तः, खेचरोऽपि क्षितीश्वरम् ॥ ४३ ॥ त्वादृशा अपि भूपालाः, शरणागतवत्सलाः । गरीयांसः स्खलन्त्येवं, प्रतिज्ञातार्थवर्त्मनः ॥ ४४ ॥ कस्याधारे तदा लोके, लोकेश्वर ! विचारय । चराचरजगद्बन्धुर्धर्मः शर्मनिधिर्भवेत् ॥ ४५ ॥ इत्याकर्ण्य सकर्णानां, गुरुर्वर्णाग्रणीर्भृशम् । ह्रीणः प्रतिवचो दातुं, तस्य नासीन्मनागलम् ॥ ४६ ॥ अथागत्य क्षणाद्बाला, बालादित्योपमप्रभा । कुर्वती विस्मयं तत्र, तद्वामाङ्गमशिश्रियत् ॥ ४७ ॥ किमेतत्तं नृपः प्राह, सोऽवक् तं विद्यया मया । त्वत्प्रबोधाय राजेन्द्र !, माया ह्येवं विनिर्ममे ॥ ४८ ॥ दृष्टनष्टं क्षणाद्राजन्निन्द्रजालमिदं यथा । तथा स्त्रीराजऋद्ध्यादि, सर्वं संसारवर्त्मनि ॥ ४९ ॥ यतः—न्यस्तो हन्त यदेन्द्रजालविदुषा मोहेन बन्धो दृशां, दृष्टाः काञ्चनचन्द्रचम्पकनिभाकारास्तदा योषितः । सम्प्रत्यत्र विवेकमन्त्रपयसा ध्वस्ते यथावस्थितं, तत्कायेषु वसात्वगस्थिपिशितस्तोमादि संलक्ष्यते ॥ ५० ॥ ततः संजातसंवेगरङ्गः सङ्गपराङ्मुखः । हेमकोटिप्रदानेन, तमानन्दपदं व्यधात् ॥ ५१ ॥ तत्रोद्याने समायासीद्देवप्रभगुरुस्तदा । भूपालोऽपि नमस्कर्तुमाययौ तं प्रमोदवान् ॥ ५२ ॥ तस्मै विनयनम्राय, सुधामधुरया गिरा । मुनीन्द्रोऽपि व्यधादेवं, सम्यक् श्रीधर्मदेशनाम् ॥ ५३ ॥ यथा—लज्जातो भयतो वितर्कविधितो मात्सर्यतः स्नेहतो,



---

१ सर्वथाऽधाक्षीत् २ ममत्व०

लोभादेव हठाभिमानविनयात् शृङ्गारकीर्त्यादितः । दुःखात्कौतुकविस्मयव्यवहृतेर्भावात्कुलाचारतो, वैराग्याच्च भजन्ति धर्ममलं तेषाम-मेयं फलम् ॥ ५४ ॥ धर्मः श्रुतोऽपि दृष्टोऽपि, कृतोऽपि कारितोऽपि च । अनुमोदितोऽपि राजेन्द्र !, पुनात्यासप्तमं कुलम् ॥५५॥ निशम्येति क्ष्मास्वामी, शान्तमोहो मुनीश्वरम् । अप्राक्षीत्किं विभो ! प्राच्यभवे पुण्यमहं व्यधाम् ? ॥ ५६ ॥ गुरुराह महाराज !, त्वमासीर्नन्दने पुरे । भृत्यः शङ्खमहेभ्यस्य, सन्मतिर्नन्दनाभिधः ॥ ५७ ॥ स्मेराम्बुजव्रजोपेतं, व्रजन्तं त्वां गृहं प्रति । कन्याभि-र्युगसंख्याभिर्निरीक्ष्य जगदे मुदा ॥ ५८ ॥ स्फुरत्सौरभसंभारसाराणि करपङ्कजे । अर्हत्पूजोपयोगीनि, सन्त्यस्य कमलान्यहो ॥५९॥ निशम्येति प्रशान्तात्मा, नन्दनोऽपि जगाद ताः । साधु साधु वचः प्रोचुर्भवत्यो मे शिवावहम् ॥ ६० ॥ यतः—सद्यस्कपुष्पस-रपनमनोरमफलादयः । धन्यस्यैवोपयुज्यन्ते, भावतो जिनपूजने ॥ ६१ ॥ ततोऽसौ निर्मलीभूय, तद्वचःप्रेरितोऽधिकम् । अर्हतो निर्ममे पूजां, निर्मलेन स्वचेतसा ॥ ६२ ॥ भूमौ न्यस्तं यथा बीजं, सुवायुजलयोगतः । शतशो वर्द्धते भावविधिसारा तथाऽर्चना ॥ ६३ ॥ यतः—श्रेयस्तनोति दुरितानि निराकरोति, लक्ष्मीं करोति शुभसंचयमातनोति । पूज्यत्वमानयति कर्मरिपून्निहन्ति, पूजा जिनस्य रचिता निजभावसारम् ॥ ६४ ॥ चक्रेऽनुमोदनाताभिः, कन्याभिर्निर्निभाशयम् । नृपतिस्त्वं ततो जातस्ता एतास्तु तव प्रियाः ॥ ६५ ॥ धर्मः स्वल्पोऽपि सद्भावान्निर्विकल्पेन चेतसा । निर्मितः कुरुते प्रेत्य सर्वाद्भुतसुखश्रियम् ॥ ६६ ॥ एवं गुरुगिरं श्रुत्वा, जातजातिस्मृतिर्नृपः । स्वसाम्राज्यपदे न्यस्य, पुत्रं श्रीपद्मशेखरम् ॥ ६७ ॥ अर्हच्चैत्येषु सर्वेषु, विधायाष्टाह्निकोत्सवम् ।

१ विभो २ निर्ममत्वेन ३ अनाश्रयणाभ्यवसायपूर्वकम्

सार्द्धंरः परिव्रज्यां, सकल्यां समाददे ॥ ६८ ॥ युग्मं ॥ पठनैकादशाङ्गानि, राजर्षिर्विधिवत्सुधीः । अध्यैषीत्स्वगुरोः पार्श्वे, ज्येष्ठ-भक्तिभवं फलम् ॥ ६९ । वयःपर्यायसूत्रार्थैर्गरिष्ठेषु तपस्विषु । तनोतिच्छद्मना मुक्तो, यो भक्तिं शक्तितोऽनिशम् ॥ ७० ॥ स क्लिष्टकर्म निःशेषं, विधूय सहसाऽऽत्मनः । उच्चैर्गोत्रं समासाद्य, मोदते तीर्थकृच्छ्रिया ॥ ७१ ॥ युग्मं ॥ श्रुत्वेति स मुनिः मौन-स्यान्तोऽभिग्रहमग्रहीत् । भोजनादस्तु भोक्तव्यं, मया ज्येष्ठानगारिणाम् ॥ ७२ ॥ विधेया च यथाशक्ति, भक्तिस्तेषु विशेषतः । अन्नपानौषधाद्यैः, प्रायोग्यैर्जीवितावधि ॥ ७३ ॥ प्रशशंस यतिस्वामी, ततस्तं बहुमानतः । धन्योऽसि त्वं महाभाग !, यस्य ते मतिरीदृशी ॥ ७४ ॥ जाग्रद्गुणगरिष्ठानां, ज्येष्ठानां भक्तिरुत्तमा । न वै ग्रन्थिकसत्त्वेन, विधातुं शक्यते क्वचित् ॥ ७५ ॥ गच्छे तत्र गरीयांसो, भूयांसः सन्ति साधवः । वयसा तपसा पूर्वश्रुतेनाद्भुतलब्धयः ॥ ७६ ॥ भक्तितो भक्तमानीय, पानीयं वा नवं नवम् । औषधं भेषजं वस्त्रपात्राणि च दिने दिने ॥ ७७ ॥ निर्मायं ददतस्तस्य, राजर्षेर्यतिसंततेः । न क्वापि जिह्मतां प्राप, उद्यमो विरागेऽप्यहो ॥ ७८ ॥ अन्यदेन्द्रकृतां तस्य, राजर्षेर्गुणसंस्तुतिम् । श्रुत्वा रत्नाङ्गो देवः, सद्दृष्टिः साधुभक्तिभृत् ॥ ७९ ॥ हेमाङ्गदेन देवेन, समं मिथ्यादृशा भुवि । आयासीत्तत्परीक्षार्थं, नगरे पोतनाह्वये ॥ ८० ॥ राजर्षौ शृण्वति प्राह, मित्रं हेमाङ्गदः सुरः । शैवास्तपोधना लोके, पवित्रा दुष्करव्रताः ॥ ८१ ॥ जैनास्तु यतयः सर्वे, शौचाचारपराङ्मुखाः । सन्त्येते मलिनाकाराः, सायुषाः स्वादुभोजिनः ॥ ८२ ॥ युग्मं ॥ रत्नाङ्गदस्तदाऽवादीद्, हसन् हेमाङ्गदं पुनः । भव्येतरपरिज्ञानं, नो वेत्सि यतिनां यतः

१ पर्यन्ताशिता . २ ०मनः प्र. ३ मात्रानी । ४ आचार्यः ५ गेत रर्मगन्धि भिन्ना म प्रनिरूपत्त. ६ मागार्गेनपूर्गम्

॥ ८३ ॥ जैनस्याभिनवस्यापि, मुनेर्नार्हन्ति षोडशीम् । कलां शैवाः शरल्लक्षतपःक्लेशविधायिनः ॥ ८४ ॥ निन्दास्तुती तयोरेवं, श्रुत्वा राजर्षिरात्मवित् । कोपं दत्ततपोलोपं, प्रमोदं च न हि व्यधात् ॥ ८५ ॥ ततो निर्माय तौ कीरद्वन्द्वरूपं स्फुरद्द्युति । समीपे जग्मतुः शैवमार्गानुगतपस्विनां ॥ ८६ ॥ कीरेण निर्ममे कीर्या, पुरो वाचा प्रगल्भया । निन्दा तपस्विनां तेषां, निजाचारविधायिनाम् ॥ ८७ ॥ शैवास्तपोधना एते, सदारा अविवेकिनः । भक्ष्याभक्ष्यपरिज्ञानपरित्यक्ताः पशूपमाः ॥ ८८ ॥ कीरः क्रूरगिरा कुर्वन्नेवं तन्मतगर्हणाम् । केनचिन्मुनिनाऽमारि, शैवेन कुपितात्मना ॥ ८९ ॥ रत्नाङ्गदोऽवददेवं, मित्रं हेमाङ्गदं प्रति । स्वरूपं भवता दृष्टं, शैवार्हततपस्विनाम् ? ॥ ९० ॥ वर्षकोट्याऽर्जितस्यापि, दत्ते तिलजलाञ्जलिम् । यतिः स्वतपसो नूनं, परप्राणजिघांसया ॥ ९१ ॥ ततः परीक्ष्य राजर्षेर्ज्येष्ठभक्तिस्थिरात्मताम् । नानोपसर्गनिर्मागैर्दैवमायासमुद्भवैः ॥ ९२ ॥ मिथ्यात्वमोहनीयस्य, क्षयोपशमयोगतः । समक्त्वं दुर्लभं लेभे, तदा हेमाङ्गदः सुरः ॥ ९३ ॥ युग्मम् ॥ साक्षाद्भूय ततो नत्वा, तं राजर्षिं शमाम्बुधिम् । निवेद्येन्द्रगुणख्यातिस्वरूपं तौ दिवं गतौ ॥ ९४ ॥ स्थविरश्रेणिवात्सल्यविधानसुकृतेन सः । निबद्धतीर्थकृत्कर्मा, शुक्रे कल्पे सुरोऽभवत् ॥ ९५ ॥ ततश्च्युत्वा विदेहेषु, पद्मोत्तरनरेश्वरः । अर्हतः पदमासाद्य, समेष्यति महोदयम् ॥ ९६ ॥ एवं निशम्य गुणवृद्धमुनीन्द्रशश्वद्वात्सल्यदर्शितफलं चरितं सहर्षम् । पद्मोत्तरस्य नृपतेः किल भव्यलोका !, ज्येष्ठेषु भक्तिमनिशं रचयन्तु सम्यग् ॥ ९७ ॥

## इति श्रीपञ्चमस्थानके वृद्धभक्त्युपरि नृपश्रीपद्मोत्तरनरेन्द्रकथानकम् ॥

---

१ शुक० २ शैवमार्गानुसारिणां तपोधनानाम् ३ भृष्टया ४ [illegible] ५ [illegible] ६ स्वर्गं ७ मोक्षम्

अथ षष्ठस्थानकाधिकारः, तत्र बहुश्रुतानामाचार्योपाध्यायादिसर्वसाधूनां वात्सल्यं विधिवद्विधेयं, श्रुतं तु बद्धाबद्धभेदाभ्यां द्विविधं, यतः—*बद्धमबद्धं तु सुअं, बद्धं (तु) दुवालसंगि निदिट्ठं । तव्विवरीयमबद्धं, निसीहमनिसीह बद्धं च ॥ १ ॥ बद्धं च तत् सम्यक्श्रुतं योगोद्वहनविधिनोद्देशसमुद्देशानुज्ञापूर्वकोपसंपदा प्राप्तं बहु-सूत्रार्थोभयभेदैः कालिकोत्कालिकाङ्गप्रविष्टादिभेदैश्चानेकधा श्रुतं येषां ते बहुश्रुताः, ते च द्वादशाङ्गीधरदशपूर्वधरादिभेदैरनेकधा, तेषां भक्तिर्विशुद्धवस्त्रपात्रभक्तपानादीनां यथोचितदानेन ' नमो उवज्झायाणं, नमो चउद्दसपुव्वीणं ' चेत्यादिपदानां बहुशः पठनेन तथा द्वादशावर्त्तवन्दनप्रदानविश्रामणादिना च भवति, बहुमानसारं बहुश्रुतेषु विधीयमाना भक्तिस्तीर्थङ्करनामकर्मोदयाय जायते, यतः—बहुश्रुतानां यो भक्तिं, विधत्ते वस्तुभिः शुभैः । महेन्द्रपालभूपाल, इव स्यात्स जगत्प्रभुः ॥ २ ॥ तथाहि—अधित्यकायां[1] सिद्धाद्रेः, श्रीसोपारकपत्तने । महेन्द्रपालभूपाल, आसीद्विद्याविदग्रणीः ॥ ३ ॥ अधीती[3] दर्शनग्रन्थेष्वस्तोंघी शब्दवर्त्मनि । यो बभूव भुवो भर्त्ता, विनयी गुरुसेवया ॥ ४ ॥ परिच्छदो[6]ऽपि तस्यासीत्कलासु कुशलोऽखिलः । लोकोक्तिस्तदसौ सत्या, यथा राजा तथा प्रजा ॥ ५ ॥ मन्यते सद्गुरोर्योगाऽभावान्मिथ्यामतिः परम् । स सद्भूततया पश्व, भूतान्येव महीपतिः ॥ ६ ॥ विना गुरुभ्यो गुणनीरधिभ्यो, जानाति धर्मं न विचक्षणोऽपि । आकर्णदीर्घोज्ज्वललोचनोऽपि, दीपं विना पश्यति नान्धकारे ॥ ७ ॥ तस्य वार्धस्पतिर्वाचस्पतिवत्प्रतिभाद्भुतः । सर्वज्ञधर्मपूतात्मा, समभू-

* बद्धमबद्धं तु श्रुतं बद्धं तु द्वादशाङ्गी निर्दिष्टम् । तद्विपरीतमबद्धं निशीथमनिशीथं बद्धं तु ॥ १ ॥ १ पर्वततलासन्ना भूमिः अधित्यका २ विद्याधराधीश ३ अभ्यासयुतः ४ अल्पधर्मग ५ राजा ६ परिवार ७ वर्त्तमानतया ८ नाम्ना ९ सुरगुरुवत् १० नवनवोल्लेख-

रसचित्रार्थेणी. ॥ ८ ॥ तस्यास्ति श्रुतशीलाख्यः, सोदरः सुन्दराशयः । प्राणेभ्योऽपि प्रियः पृथ्वीभर्तुः शश्वत्सहव्रजः ॥ ९ ॥ अन्यदा कुर्वतीं गानं, श्रोतृश्रोत्रसुधास्त्रवम् । सुवर्णकुण्डलोद्योतविद्योतितमुखाम्बुजाम् ॥ १० ॥ मातङ्गस्वामिनीं वीक्ष्य, स्निग्धमुग्धैतनुद्युतिम् । मोहग्रहगृहीतात्मा, कामार्त्तोऽजनि भूमिभृत् ॥ ११ ॥ युग्मं ॥ तद्भावमिङ्गितैर्ज्ञात्वा, श्रुतशीलो विवेकवान् । उपदेशैः सुधासारदेश्यैस्तं सिक्तवानिति ॥ १२ ॥ मा दश्यतां हृदय ! हन्त तमस्करोऽयमेणीदृशो वदनरूपधरो मृगाङ्कः । आच्छाद्य निर्मलविवेकदृश विसारि, यस्मादिदं स्फुरति मोहमहान्धकारम् ॥ १३ ॥ यो विशुद्धान्वयी नारीं, पुमान् कामयतेऽधमाम् । सोऽधमां गतिमाप्नोति, शतशः पापपूरितः ॥ १४ ॥ व्यसनैकनिवासमन्दिरं, कुलमालिन्यविधानकज्जलम् । जनतावचनीयताऽऽस्पदं, परनारीगमनं न शोभते ॥ १५ ॥ सा बुद्धिः प्रलयं प्रयातु कुलिशं तस्मिन् श्रुवे पात्यतां, वल्गन्तः प्रविशन्तु ते हुतभुजि ज्वालाकराले गुणाः । यैः सर्वैः शरदिन्दुकुन्दविशदैः प्राप्तैरपि प्राप्यते, भूयोऽप्यत्र पुरन्ध्रिगर्भनरककोटाधिवासस्पृहा ॥ १६ ॥ इति । तथापि कामदावाग्निसंतप्तं नृपतेर्मनः । न मनाग् शीतलीभूतमहो, तापो मनोभुवः ॥ १७ ॥ राज्याधिष्ठायिका देवी, ततो मन्त्रिरमृता सती । तं शशास दुराचारं, वपुषि व्याधिसंक्रमात् ॥ १८ ॥ तद्रोगव्यथयाऽत्यर्थं, व्यथिताङ्गो नरेश्वरः । विलापं रङ्कवत्कुर्वन्, व्यरमत्पाप्मनस्ततः ॥ १९ ॥ ततो निर्णिक्तसद्भक्त्या, तामानीय प्रसन्नताम् । निरामयं नृपं मन्त्री, कृपालुर्विदधे पुनः ॥ २० ॥ भूभुजा स्वात्मशुद्ध्यर्थं, पश्चात्तापं वितन्वता । पापव्यपगमोपायं, मन्त्री पृष्टोऽन्यदाऽवदत् ॥ २१ ॥ लोके जलमयान्येव, सन्ति तीर्थानि

---

शाकिनी मतिः १ अमात्योत्तमः २ सदा सहचर. ३ ०भद्रक० ४ राजा ५ ०ममानै. ६ वज्रम् ७ अग्नौ ८ कामग्र

भूपते । । तेषु स्नानेन कायस्य, शुद्धि. स्यान्मनसो न हि ॥ २२ ॥ यतः—चित्तमन्तर्गतं दुष्टं, मलिनं कर्मरेणुभिः । शतशोऽपि जलैर्धौतं, सुराभाण्डमिवाशुचि ॥ २३ ॥ तथापि विदुषां पञ्चशती प्रातः सभागता । प्रष्टव्या पाप्मनामात्मलग्नानां शुद्धिहेतवे ॥ २४ ॥ तत प्रातः समाहूय, विद्वत्पञ्चशतीं नृपः । अप्राक्षीत्पापनिर्मुक्तिनिमित्तं, साऽपि तं जगौ ॥ २५ ॥ गङ्गापगांपय.पानात्तीर्थतोयाभिषेकतः । विद्यया वह्निहोमेन, दानैः शास्त्रोदितैस्तथा ॥ २६ ॥ नर्मदाया मृदालेपाद्, व्रतैर्नानातपोमयैः । शुद्ध्यन्ति प्राणिनः प्राय., पापकर्ममलीमसा. ॥ २७ ॥ यत.—कालेन स्नानशौचाभ्यां, संस्कारैस्तपसेज्यया । शुद्ध्यन्ति दानैः संतुष्ट्या, द्रव्येणात्मा तु विद्यया ॥ २८ ॥ तथा-क्षान्त्या शुद्ध्यन्ति विद्वांसो, दानेनाकार्यकारिणः । प्रच्छन्नपापा जापेन, तपसा वेदवित्तमाः ॥ २९ ॥ रथ्याकर्दमतोयानि, स्पृष्टान्यन्त्यैश्च वायसै. । मारुतैरेव शुद्ध्यन्ति, पक्वेष्टकचितानि च ॥ ३० ॥ पन्थानश्च विशुद्ध्यन्ति, सोमसूर्यांशुमारुतै । अद्भिर्गात्राणि शुद्ध्यन्ति, मनः सत्येन शुद्ध्यति ॥ ३१ ॥ विद्यातपोभ्यां भूतात्मा, बुद्धिर्ज्ञानेन शुद्ध्यति । ब्रह्मचारिगतं भैक्ष्यं, नित्यं शुद्धमिति स्मृतम् ॥ ३२ ॥ इत्याकर्ण्य नृपः प्राह, सर्वेषां संमतं मतम् । किमस्त्येतज्जगुस्तेऽपि, सत्यमेतन्नराधिप ! ॥ ३३ ॥ अन्येद्युस्तत्परीक्षार्थं, दुग्धकुम्भान् विभुर्भुवः । पण्डितान् प्रार्थयामास, कस्मिंश्चित्पुण्यकर्मणि ॥ ३४ ॥ लोभक्षोभाऽऽस्तस्वान्ता, अम्भ कुम्भांस्तु केवलान् । निश्यानीय नृपावासे, न्यधुस्ते तुल्यबुद्धयः ॥ ३५ ॥ अम्भ एव नृपः प्रातर्वीक्ष्याख्यद्विदुषोऽखिलान् । भवन्तोऽत्र यथा जाता, लोभान्धा विप्रलम्भकाः ॥ ३६ ॥ तथाऽत्र पाप्मनः शुद्धिर्विधौ मुग्धधियो

॥२६॥

१ ०नदी० २ ०जन्त० ३ पूजया ४ मार्गे० ५ राजा ६ न्यापयामास ७ प्रतारकाः

युतम् । ततो विवादो विद्वद्भिः, सहाभूद् भूतस्थिरम् ॥ ३७ ॥ तस्मिन्नवसरे तत्र, पुरे पुण्योदयात्सताम् । श्रीयेगमुनिरायासीद-सीममहिमोदधिः ॥ ३८ ॥ तमानम्य नृपोऽप्राक्षीत्, पाप्मनः शुद्धिकारणम् । मुनिराख्यत् द्विधा शुद्धिर्बाह्याभ्यन्तरभेदतः ॥ ३९ ॥ शुद्धिर्जलादिभिर्बाह्या, जडैरेव विधीयते । अशुद्धः पाप्मनाऽन्तश्चेद्बहिःशुद्धया हि किं भवेत् ? ॥ ४० ॥ यतः—न मृत्तिका नैव जलं, न चाग्निः कर्मशोधनम् । शोधयन्ति बुधाः कर्म, ज्ञानध्यानतपोजलैः ॥ ४१ ॥ सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं, जलशौचं तु पञ्चमम् ॥ ४२ ॥ कामरागमदोन्मत्ता, स्त्रीणां ये वशवर्तिनः । न ते जलेन शुद्ध्यन्ति, स्नाना-त्तीर्थशतैरपि ॥ ४३ ॥ अन्तरङ्गा भवेच्छुद्धिर्मनोमलविशोधनम् । सम्यग्ज्ञानक्रियायोगाद्भावतीर्थावगाहनात् ॥ ४४ ॥ यतः—आलोचनानिन्दनगर्हणाभिः, सम्यक्क्रियाबोधतपोभिरुग्रैः । तत्पापकर्मसृजतस्त्रिधाऽपि, स्याद्धुर्विशुद्धिः खलु दुष्कृतानाम् ॥ ४५ ॥ सर्वाश्रवनिरोधेन, संयमेन शमी मुनिः । शोधयेत्तत्क्षणादेव, क्लिष्टकर्मावलीमलम् ॥ ४६ ॥ राजन् ! मुहूर्त्तमानेन, सर्वसंवररूपया । तपस्यया भवेत्प्राणी, कर्माष्टकमलोज्झितः ॥ ४७ ॥ श्रुत्वेति देशनां तस्य, सम्यक् शुद्धिप्रकाशिनीम् । तपस्याऽऽदायि संवेगात्, श्रुतशीलेन मन्त्रिणा ॥ ४८ ॥ गृहीतसंयमं श्रुत्वा, श्रुतशीलं नृपो हृदि । गुरून् प्रति वहन् द्वेषं, मन्त्रिणा प्रतिबोधितः ॥ ४९ ॥ तत्रान्यदा सदाचारखानिरिन्दुरिव शीतलः । समन्तभद्रनामाऽऽगादाचार्यः श्रुतकेवली ॥ ५० ॥ मन्त्रिप्रेरणया राजा, तत्रागत्य तमान-मत् । गुरुणाऽपि तयोरग्रे, निर्ममे धर्मदेशना ॥ ५१ ॥ तथाहि—मत्ताश्च कुञ्जरवरेन्द्रशिरोऽधिरूढा, हारार्द्धहारमणिकुण्डलभपि-

१ अपरिमाण० २ देशाविनिरूपा, मर्मनिरतेरत्तत्र स्वीयारर्णनात् समन्तभद्रागमे मन्त्रिप्रेरणा स्वनाथ

ताङ्गाः । निर्यान्ति मङ्गलशतैः परिपूज्यमाना, धर्मस्य तत्फलमुदारमुदाहरन्ति ॥ ५२ ॥ धर्मादधिगतैश्वर्यः, सेवते धर्ममेव यः । सत्यं शुभगतिर्भावी, स कृतज्ञशिरोमणिः ॥ ५३ ॥ अन्यस्य धर्मार्जनतत्परस्य, कुर्वन्ति ये मूढधियोऽन्तरायम् । तस्योपरि द्वेषमधानयन्ति, ते दुःखभाजो मनुजा भवन्ति ॥ ५४ ॥ ये धर्मकार्योद्यमतत्पराणां, साहाय्यमुच्चै रचयन्ति तेषाम् । भोगोपभोगोत्तमशर्मलक्ष्मीर्वृणोति वै नित्यमनन्तरायम् ॥ ५५ ॥ यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव कृतिना कार्यः प्रयत्नो महान्, संदीप्ते भवने हि कूपखननं प्रत्युद्यमः कीदृशः ? ॥ ५६ ॥ निशम्येति गिरं सूरेः, पीयूषद्रवसोदराम् । जयन्ततनयं राज्ये, निवेश्योत्सवपूर्वकम् ॥ ५७ ॥ महेन्द्रपालभूपालः, समेतस्तेन मन्त्रिणा । शिश्राय संयमं मुक्तिपथपाथेयमक्षयम् ॥ ५८ ॥ पठित्वाऽसौ क्रमादेकादशाङ्गी गुरुसन्निधौ । गीतार्थोऽजनि निष्णातो, निश्चयव्यवहारयोः ॥ ५९ ॥ यतयः सन्ति गच्छेऽध्ययनाध्यापनोद्यताः । नानालब्धिभृतोऽनेके, तपस्यन्तो बहुश्रुताः ॥ ६० ॥ महेन्द्रपालराजर्षिरन्यदा गुरुसन्निधौ । स्थानकानां शृणोति स्म, विचारं विंशतेरिति ॥ ६१ ॥ एतेषु विंशतिस्थानेष्वेकं येनापि सुदृशा । विधिनाऽऽराध्यते सम्यग्, तद्ध्यानाधीनचेतसा ॥ ६२ ॥ तस्य जैनेश्वरी संपन्निष्कम्पोदयशालिनी । सम्यक् तत्पुण्यमाहात्म्याद्वशीभवति लीलया ॥ ६३ ॥ स मुनिः श्रवणोत्तंसीकृत्येति वचनं गुरोः । बहुश्रुतेषु वात्सल्याभिग्रहं जगृहे ततः ॥ ६४ ॥ तथाहि—सूत्रार्थापेक्षया स्वस्माद्यावत्पूर्वधरानपि । बहुश्रुतानुपाचारीद्भोज्यवस्त्रौषधादिभिः ॥ ६५ ॥ विश्रामणादि तत्राभूद्यद्वात्सल्यं



१ ०सुख० २ कुशलः ३ अनेकप्रकारलब्धियुताः ४ सम्यग्दृशा ५ श्रवणयोरवतंसो—मुकुटः तथाकृत्वा अवधार्येत्यर्थः ६ असेविष्ट ७ संवाहनादि

न स व्यधात्। का मर्त्यवार्त्ताऽरज्यन्त, न के नाकेऽपि नाकिनः ॥ ६६ ॥ धनदेनान्यदा चक्रे, शक्रे शृण्वति संसदि। महेन्द्रपालराजर्षेः, सद्गुणस्तुतिरीदृशी ॥ ६७ ॥ *धन्यास्ते गृहिणो येषां, गृहं राजर्षिरहिमिः। पुनीतेऽसौ विशुद्धात्मा, श्रुतभृद्भक्तिभावितः* ॥ ६८ ॥ असावपि नरेन्द्रर्षिः, श्लाघ्यजन्मा महात्मनाम्। बहुश्रुतेषु वात्सल्यं, विधत्ते योऽर्हदाज्ञया ॥ ६९ ॥ यतः—
कुर्वन्ति पानसाद्स्वमपि स्वीकृत्य केचन। एके स्वमपि नो वस्तुं, धिक् चित्रं जन्मिनां मनः ॥ ७० ॥ स्थूलर्लक्षन्त्यहो केचिद्, दरिद्रत्वेऽपि सात्त्विकाः। अन्ये कोटीश्वरत्वेऽतिकृपणन्त्यथ ही विधिः ॥ ७१ ॥ श्रीदेनेत्युक्तमाकर्ण्य, ततो नाकिविभावसुः। श्रेष्ठीभूय पुरि प्रापोज्जयिन्यां तं परीक्षितुम् ॥ ७२ ॥ ग्लानस्य कस्यचित्साधोरुपचारार्थमन्यदा। तस्य वेश्मनि कूष्माण्डपाकप्रार्थनहेतवे ॥ ७३ ॥ असौ राजर्षिरायासीद्, धर्मलाभाशिषं ब्रुवन्। सोऽपि तं दातुमुत्तस्थौ, ससंभ्रममनाः स्वयम् ॥ ७४ ॥ निमेषोज्झितनेत्रत्वादनिमेषं विभाव्य तम्। *ऋषिर्निषिद्धवानेष, देवपिण्डो न कल्पते* ॥७५॥ *कुपितेन ततस्तेन, सर्वत्रानेषणा कृता।*
अन्वेषयन्नमुं शुद्धं, बभ्राम प्रतिवेश्म सः ॥ ७६ ॥ क्रमेण स ययौ शूरसार्थवाहस्य वेश्मनि। प्रापत्सुविशुद्धं पाकमनाभोगाद्दिवौकसः ॥ ७७ ॥ सुपात्रदानतुष्टेन, नाकिना तेन तद्गृहे। वृष्टिर्व्यधायि रत्नानां, पौराणां विस्मयावहा ॥ ७८ ॥ साक्षाद्भूय सुरः सोऽपि, नत्वा तं सद्गुरुं मुनिम्। ततो गुणस्तुतिं कुर्वन्, निजसद्मनि जग्मिवान् ॥ ७९ ॥ राजर्षिरर्जितार्हन्त्यकर्मा निर्माय गौरवम्। बहुश्रेयस्यभूद् ग्रैवेयकेऽसौ नवमे सुरः ॥ ८० ॥ ततश्च्युत्वा विदेहेषु, भविताऽसौ जिनेश्वरः। श्रुतशीलमुनि-

१ स्वर्गे २ देवाः ३ पाशाधीनं ४ परकीयमपि ५ पानसादिति गम्यं ६ बहुऋशाधिपवादानरन्ति ७ सम्मिति ८ प्रतिगृहं ९ जगाम

रतस्य, गणभृच्च भविष्यति ॥ ८१ ॥ महेन्द्रपालक्षितिपालवृत्तमिदं समाकर्ण्य बहुश्रुतेषु । निरतुल्यवात्सल्यविधौ विधेयो, यतो जिनेन्द्रप्रभुतामदायी ॥ ८२ ॥ **इति षष्ठस्थानके भूपालश्रीमहेन्द्रपालकथानकम् ॥**

अथ सप्तमस्थानके दुस्तरतपःकरणतत्पराणां विशुद्धाशयपूर्वकमशुभोदयकर्मनिर्जरानिदानं विवेकिना गौरवं विधेयं, यतः—×सुतवस्सियाण पूआपणामसक्कारविणयकज्जपरो । बद्धंपि कम्ममसुहं, सिढिलेइ दसारनेया व ॥ १ ॥ तत्र बाह्याभ्यन्तरभेदाभ्यां द्विप्रकारमपि तपो भूयोभवार्जितनिकाचितकर्मनिर्जराऽवन्ध्यकारणं, यतः—दीप्यमाने तपोवह्नौ, बाह्ये चाभ्यन्तरेऽपि च । यमी जरति कर्माणि, दुर्जराण्यपि तत्क्षणात् ॥ २ ॥ तत्र बाह्यमुपवासादि षोढा, यतः—*अणसणमूणोयरिया, वित्तीसंखेवणं रसच्चाओ । कायकिलेसो संलीणया य बज्झो तवो होइ ॥ ३ ॥ तत्रानशनं चतुर्विधाहारादिपरित्यागरूपं द्विधा–इत्वरं यावत्कथिकं च, तत्राद्यं परिमितकालोपवासरूपं चतुर्थादिषण्मासपर्यन्तमभक्तार्थापरनाम यस्य,† उववासो इह भणिओ, पक्खेवाहारवज्जणं चउहा । उत्तरगुणवुड्ढिकए, मुणीण निरवज्जवित्तीणं ॥ ४ ॥ यावत्कथिकं त्वाजन्मभाविविशेषोपाधिभेदतस्त्रिप्रकारं–पादपोपगमनं इङ्गितमरणं भक्तपरिज्ञा च, तत्राद्यं व्याघातवन्निर्व्याघातवच्च, व्याघाते सिंहादिरूपे सति यत्तत्, उक्तं च–¶सीहाइसु अभिभूओ, पाउवगमणं

---

× सुतपस्विनां पूजाप्रणामसत्कारविनयकार्यपरः । बद्धमपि कर्माशुभं, शिथिलयति नेतेव दशार्हाणाम् ॥ १ ॥

* अनशनमवमौदर्यं वृत्तिसंक्षेपणं रसत्यागः । कायक्लेशः संलीनता च बाह्यं तपो भवति ॥ ३ ॥

† उपवास इह भणितः प्रक्षेपाहारवर्जनं चतुर्धा । उत्तरगुणवृद्धिकृते मुनीनां निरवद्यवृत्तीनाम् ॥ ४ ॥ ¶ सिंहादिभिरभिभूतः पादपोपगमनं करोति स्थिरचित्तः । आयुषि प्रभवति विज्ञाय परं गीतार्थः ॥ ५ ॥ चत्वारि (वर्षाणि) विचित्राणि विकृतिनिर्यूढानि चत्वारि

वीसत्थो ॥११॥ एषाऽल्पाहारादिभेदतः पञ्चधा, + अप्पाहार अवड्ढा, दुभाग पत्ता तहेव किंचूणा । अट्ठ दुवालस सोलस चउवीस तहेक्कतीसा य ॥ १२ ॥ भावोनोदरता कषायत्यागतो भवति, यथा—* कोहाईणमणुदिणं, चाओ जिणवयणभावणाओ अ। सा भावोणोदरिया, पन्नत्ता वीयरागेहिं ॥ १३ ॥ इत्यूनोदरता । अथ वृत्तिसंक्षेपः—स च साधूनां गोचराभिग्रहरूपः, श्राद्धादीनां द्रव्यादिसंक्षेपरूपः, अभिग्रहः पुनर्द्रव्यक्षेत्रकालभावैश्चतुर्धा, द्रव्यतो निर्लेपादिद्रव्यग्रहणं, यतः—[।] लेवडमलेवडं वा, अमुगं दवं च अज्ज घिच्छामि । अमुएणं दवेणं अह दवाभिग्गहो नाम ॥ १४ ॥ क्षेत्राभिग्रहः पुनः स्वग्रामपरग्रामनियतगृहावलिनियमरूपः, कालाभिग्रहः प्रथमद्वितीयतृतीयपौरुष्यादिकालरूपः, यतः—× काले अभिग्गहो पुण आई मज्झे तहेव अवसाणे ॥ १५ ॥ गायंतो रोअंतो, जं देइ निसन्नमाइओ वावि । ओसक्कण अहिसक्कण परंमुहालंकिइयरो वा ॥ १६ ॥ इत्यादिरूपो भावाभिग्रहो ज्ञातव्यः । अथ रसत्यागः, तत्र रसाः—॥ खीर १ घय २ दहि ३ तिल्लं ४ गुलं ५ पक्कन्नं ६ छ भक्खविगइओ' त्ति वचनात् क्षीरादिषड्विकृतयः, तासां त्यागः, 'लूहवित्तीसुसंतुट्ठेण'' अभिक्खणं निव्विगइं गया य' इत्याद्यागमवचनात्, प्रत्यहं विकृतीनां

---

+ अल्पाहारा अपार्धा द्विभागा प्राप्ता तथैव किञ्चिन्न्यूना । अष्ट द्वादश षोडश चतुर्विंशतिस्तथैकत्रिंशच्च ॥ १२ ॥

* क्रोधादीनामनुदिनं त्यागो जिनवचनभावनातश्च । सा भावावमौदर्यता प्रज्ञप्ता वीतरागैः ॥ १३ ॥

। लेपकृदलेपकृद्वाऽमुकं द्रव्यं चाद्य ग्रहीष्यामि । अमुकेन द्रव्येन असौ द्रव्याभिग्रहो नाम ॥ १४ ॥

× कालेऽभिग्रहः पुनरादौ मध्येतथैवावसाने ॥१५॥ गायन् रुदन् यद्ददाति निषण्णादिको वापि । अवष्वष्कणमभिष्वष्कणपराङ्मुखालङ्कृतेतरो वा ॥१७॥

॥ क्षीरं घृतं दधि तैलं गुड पक्वान्नं षड् भक्ष्यविकृतय । रूक्षवृत्तिसुसंतुष्टः । अभीक्ष्णं ( पुष्टालम्बनमन्तरा ) निर्विकृतिगताश्च

करेइ थिरचित्तो । आउंमि पहुप्पंते वियाणिउं नवरि गीयत्थो ॥ ५ ॥ चत्तारि विचित्ताइं, विगइनिज्जूहियाइ चत्तारि । इत्यादियुक्तया क्रियमाणं निर्व्याघातं, इङ्गितप्रदेशे मरणमिङ्गितमरणं, एतच्चतुर्विधाहारपरित्यागरूपं चाणिक्यस्येव, यतः—*इंगियदेसंमि सया, चउविहाहारचायनिप्फन्नं । उवत्तणाइजुत्तं तं णेयं इंगिणीमरणं ॥ ६ ॥ भक्तपरिज्ञा त्रिविधचतुर्विधाहारत्यागादिभेदैरनेकधा, यतः—[1]भत्तपरिण्णाणसणं, तिविहाहाराइचायनिप्फण्णं । सप्पडिक्कमं नियमा, जहासमाहिं विणिदिट्ठं ॥ ७ ॥ अथोनोदरता द्रव्यभावाभ्यां द्विप्रकारा, तत्राद्या उपकरणभक्तपानादिविषया, तत्रोपकरणोनोदरता जिनकल्पिकमुन्यादीनां, न पुनरन्येषां, उपकरणाभावे समग्रसंयमाभावात्. यतः—×जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । तंपि संजमलज्जट्ठा, धारंति परिहरंति य ॥ ८ ॥ जं वट्टइ उवयारे, उवगरणं तंपि होइ उवगरणं । अइरेगं अहिगरणं, अजओ अजयं परिहरंतो ॥ ९ ॥ भक्तपानोनोदरता निजाहारपानान्न्यूनाहारग्रहणेन ज्ञातव्या, यथा—[1]बत्तीसं किर कवला, आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥ १० ॥ कवलाण य परिमाणं कुक्कुडिअंडप्पमाणमित्तं तु । जो वा अविगियवयणो, कवलं निक्खिवइ

---

* इङ्गितदेशे सदा चतुर्विधाहारत्यागनिष्पन्नम् । उद्वर्तनादियुक्तं तज्ज्ञेयमिङ्गिनीमरणम् ॥६॥ [1] भक्तपरिज्ञाऽनशनं त्रिविधाहारादित्यागनिष्पन्नम् । सप्रतिकर्म नियमात् यथासमाधि विनिर्दिष्टम् ॥७॥ × यदपि वस्त्रं वा पात्रं वा कम्बलं पादप्रोञ्छनम् । तदपि संयमलज्जार्थं धारयन्ति परिहरन्ति (उपभुञ्जते) च ॥ ८ ॥ यद्वर्तते उपकारे उपकरणं तदेव भवत्युपकरणम् । अतिरेकं अधिकरणमयतोऽयतं परिहरन् ॥ ९ ॥

[1] द्वात्रिंशत्किल कवला आहारः कुक्षिपूरको भणितः । पुरुषस्य महेलाया अष्टाविंशतिः भवेयुः कवलाः ॥ १० ॥ कवलानां च प्रमाणं कुक्कुट्यण्डप्रमाणमात्रं तु । यो वा अविकृतवदनः कवलं निक्षिपति विश्रब्धं ॥ ११ ॥

वीसत्थो ॥११॥ एषाऽल्पाहारादिभेदतः पञ्चधा, + अप्पाहार अवड्ढा, दुभाग पत्ता तहेव किंचूणा। अट्ठ दुवालस सोलस चउवीस तहेक्कतीसा य ॥ १२ ॥ भावोनोदरता कषायत्यागतो भवति, यथा—*कोहाईणमणुदिणं, चाओ जिणवयणभावणाओ अ। सा भावोणोदरिया, पन्नत्ता वीयरागेहिं ॥ १३ ॥ इत्यूनोदरता। अथ वृत्तिसंक्षेपः–स च साधूनां गोचराभिग्रहरूपः, श्राद्धादीनां द्रव्यादिसंक्षेपरूपः, अभिग्रहः पुनर्द्रव्यक्षेत्रकालभावैश्चतुर्धा, द्रव्यतो निर्लेपादिद्रव्यग्रहणं, यतः— [1] लेवडमलेवडं वा, अमुगं दवं च अज्ज घिच्छामि। अमुएणं दव्वेणं अह दव्वाभिग्गहो नाम ॥ १४ ॥ क्षेत्राभिग्रहः पुनः स्वग्रामपरग्रामनियतगृहावलिनियमरूपः, कालाभिग्रहः प्रथमद्वितीयतृतीयपौरुष्यादिकालरूपः, यतः— × काले अभिग्गहो पुण आई मज्झे तहेव अवसाणे ॥ १५ ॥ गायंतो रोअंतो, जं देइ निसन्नमाइओ वावि। ओसक्कण अहिसक्कण परंमुहालंकिइयरो वा ॥ १६ ॥ इत्यादिरूपो भावाभिग्रहो ज्ञातव्यः। अथ रसत्यागः, तत्र रसाः— ॥ खीर १ घय २ दहि ३ तिल्लं ४ गुलं ५ पकन्नं ६ छ भक्खविगइओ' त्ति वचनात् क्षीरादिषड्विकृतयः, तासां त्यागः, 'लूहवित्तीसुसंतुट्ठेण' 'अभिक्खणं निव्विगइं गया य' इत्याद्यागमवचनात्, प्रत्यहं विकृतीनां

---

+ अल्पाहारा अपार्धा द्विभागा प्राप्ता तथैव किञ्चिन्न्यूना। अष्ट द्वादश षोडश चतुर्विंशतिस्तथैकत्रिंशच्च ॥ १२ ॥

* क्रोधादीनामनुदिनं त्यागो जिनवचनभावनातश्च। सा भावावमौदर्यता प्रज्ञप्ता वीतरागैः ॥ १३ ॥

[1] लेपकृदलेपकृद्वाऽमुकं द्रव्यं चाद्य ग्रहीष्यामि। अमुकेन द्रव्येन असौ द्रव्याभिग्रहो नाम ॥ १४ ॥

× कालेऽभिग्रह. पुनरादौ मध्येतथैवावसाने ॥१५॥ गायन् रुदन् यद्ददाति निषण्णादिको वापि। अवष्वष्कणमभिष्वष्कणपराङ्मुखालङ्कृतेतरो वा ॥१७॥

॥ क्षीरं घृतं दधि तैलं गुड पक्वान्नं षड् भक्ष्यविकृतय। रूक्षवृत्तिसुसंतुष्ट। अभीक्ष्णं (पुष्टालम्बनमन्तरा) निर्विकृतिगताश्च

ग्रहणं नानुज्ञातं, यतः— + दुद्धदहीविगईओ, आहारेइ अभिक्खणं । अरए अ तवोकम्मे पावसमणत्ति वुच्चइ ॥ १७ ॥ विगयं विगईभीओ, विगइगयं जो अ भुंजए साहू । विगई विगइसहावा, विगई विगइं बला नेइ ॥ १८ ॥ सुश्रावकाणां शक्तौ पर्वणि-विकृतिवर्जनं, शेषकालं नियतविकृतिग्रहणं च वाच्यं, यतः— * जहा दवग्गी पउरेंधणे वणे, समारुओ नोवसमं उवेइ । एविंदि-यग्गीवि पयामभोइणो, न बंभयारिस्स हियाय कप्पइ ॥ १९ ॥ कायक्लेशः पुनर्वीरासनादिरूपः, यतः— ¹ वीरासणउक्कुडुअआस-णलोआइओ अ विन्नेओ । कायकिलेसो संसारवासनिव्वेयहेउत्ति ॥ २० ॥ वीरासणाइसु गुणा कायनिरोहो दया य जीवेसु । परलो-अमई य तहा, बहुमाणो चेव अन्नेसिं ॥ २१ ॥ तथा—आसनेन रुजं हन्ति, प्राणायामेन पातकम् । प्रत्याहारेण योगीन्द्रो, विकारं हन्ति मानसम् ॥ २२ ॥ अथ संलीनता—इयं चेन्द्रियसंलीनतादिभेदाच्चतुर्धा, यतः— × इंदियकसायजोए, पडुच्च संलीणया

---

+ दुग्धदधिनी विकृतीआहारयति अभीक्ष्णम् । अरतश्च तप कर्मणि पापश्रमण इत्युच्यते ॥१७॥ विकृतिं विगतिभीतो विकृतिगतं यस्तु भुङ्क्ते साधुः । विकृतिर्विकृतिस्वभावा विकृतिर्विगतिं बलान्नयति ॥ १८ ॥

* यथा दवाग्निः प्रचुरेन्धने वने समारुतो नोपशममुपैति । एवमिन्द्रियाग्निरपि प्रकामभोजिनः न ब्रह्मचारिणो हिताय कल्पते ॥ १९ ॥

¹ वीरासनोत्कुटुकासनलोचादिकश्च विज्ञेय । कायक्लेश संसारवासनिर्वेदहेतुरिति ॥ २० ॥ वीरासनादिषु गुणाः कायनिरोधो दया च जीवेषु । परलोकरतिश्च तथा बहुमान एवान्येषाम् ॥ २२ ॥

× इन्द्रियकषाययोगान् प्रतीत्य संलीनता मुणितव्या । तथैव विविक्ताचर्या प्रज्ञप्ता वीतरागैः ॥२३॥ स्पर्शनेन्द्रियदोषेण गर्त्ताशूकरत्वं यान्ति जीवाः । जिह्वालोलो व्याघ्रः घ्राणवशात् सर्पजातिषु ॥२४॥ नयनेन्द्रियेण पतङ्गा भवन्ति मृगा परं श्रवणदोषेण । एते पञ्चापि निधनं व्रजन्ति पञ्चेन्द्रिये पुनः ॥२५॥

गुणेयवा । तह य विवित्ता चरिया, पन्नत्ता वीयरागेहिं ॥ २३ ॥ फासिंदियदोसेणं, वियडसूअरत्तणंमि जंति जिया । जीहालोलो नत्थो घाणवसा सप्पजाईसु ॥ २४ ॥ नयणिंदिएणं पयगा, होंति मिया नवरि सवणदोसेणं । एए पंचवि निहणं, वयंति पंचिंदिएहि पुणो ॥ २५ ॥ तथा–इन्द्रियैर्विजितो जन्तुः, कषायैरभिभूयते । वीरैः कृष्टेष्टकः पूर्वं, वप्रः कैः कैर्न खण्डयते ? ॥ २६ ॥ तदिन्द्रियजयं कुर्यान्मनःशुद्ध्या महामतिः । यां विना यमनियमैः, कायक्लेशो वृथा नृणाम् ॥ २७ ॥ इत्यादीन्द्रियवशताविपाकं विज्ञाय शब्दादिसुन्दरेषु विषयेषु रागद्वेषाकरणमिन्द्रियसंलीनता, कषायोदयनिरोधोदीर्णविफलीकरणलक्षणा कषायसंलीनता, यतः— * उदयस्सेव निरोहो, उदयंपत्ताण चाफलीकरणं । जं इत्थ कसायाणं, कसायसंलीणया एसा ॥ २८ ॥ योगसंलीनताऽकुशलयोगनिरोधः कुशलयोगोदीरणादिरूपा, यतः— + अपसत्थाण निरोहो, जोगाणमुदीरणं पसत्थाणं । कज्जंमि य विहिगमणं, एसा संलीणया भणिया ॥ २९ ॥ विविक्तचर्या स्त्रीपशुपण्डोज्झितालयसेवनं, यतः— × आरामुज्जाणाइसु, थीपसुपंडयविवज्जिए ठाणे । फलगाईणं गहणं तह भणियं एसणिज्जाणं ॥ ३० ॥ इति बाह्यं तपः, अस्य फलं– [1] पोरसीचउत्थछट्ठे, काउं कम्मं खवंति

---

* उदयस्यैव निरोधः उदयप्राप्तानां चाफलीकरणं । यदत्र कषायाणां कषायसंलीनतैषा ॥ २८ ॥

\+ अप्रशस्तानां निरोधो योगानामुदीरणा प्रशस्तानाम् । कार्ये च विधिगमनमेषा संलीनता भणिता ॥ २९ ॥

× आरामोद्यानादिषु स्त्रीपशुपण्डकविवर्जिते स्थाने । फलकादीनां ग्रहणं तथा भणितमेषणीयानाम् ॥ ३० ॥

[1] पौरुषीचतुर्थषष्ठान् कृत्वा कर्म क्षपयन्ति यन्मुनयः । तन्नो नारकजीवा वर्षशतसहस्रलक्षैः ॥३१॥ नमस्कारादिभिर्दशमान्तैर्मुनयः कर्म क्षपयन्ति यद् गुप्त' । तन्नो वर्षशतादिभि कोटीकोट्या नैरयिकाः ॥३२॥ यन्नारकाश्च जीवाः क्षपयन्ति बहुभिर्वर्षसहस्रैः । तच्चतुर्थभोज्येव जीवो निर्जरयति शुभभावः ३३॥

जं मुणिणो । तं नो नारयजीवा, वाससयसहस्सलक्खेहि ॥ ३१ ॥ नमुआईद्दसमेहि, मुणिणो कम्मं खवंति ज गुत्ता । तं नो वाससपाईकोडाकोडीहिं नेरइया ॥ ३२ ॥ जं नारया य जीवा, खवंति बहुएहिं वाससहस्सेहि । तं खलु चउत्थभोई जीवो निज्जरइ सुहभावो ॥ ३३ ॥ तथाभ्यन्तरतपो यथा—* पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गोवि य, अब्भिंतरओ तवो होइ ॥३४॥ तत्र पापं छिनत्तीति पापच्छिन्, प्रायो यथावस्थितं चित्तमस्मिन् तत्प्रायश्चित्तं, जओ—+ पावं छिंदइ जम्हा, पायच्छित्तंति भण्णए तम्हा । पाएण वावि चित्तं, विसोहए तेण पच्छित्तं ॥ ३५ ॥ तत्पुनरालोचनादि दशधा यथा—[1] आलोयण पडिक्कमणे, मीस विवेगो तहा विउस्सग्गो । तव छेय मूल अणवट्ठया य पारंचिए चेव ॥ ३६ ॥ अथ विनयः—स चार्हदादिदशपदेषु त्रिविधव्धिीयमानः क्लिष्टकर्मनिर्जरार्थं भवति, यतः—[II] अरिहंतसिद्धचेइयसुए य धम्मे य साहु-

---

* प्रायश्चित्तं विनयो वैयावृत्त्य तथैव स्वाध्याय । ध्यानमुत्सर्गोऽपिच अभ्यन्तर तपो भवति ॥ ३४ ॥

+ पापं छिनत्ति यस्म त् पापच्छिदिति भण्यते तस्मात् । प्रायेण वापि चित्त विशोधयति तेन प्रायश्चित्तम् ॥ ३५ ॥

[1] आलोचना प्रतिक्रमणं मिश्रं विवेक. तथा व्युत्सर्ग. । तपश्छेद· मूलमनवस्थाप्यं पाराञ्चिकं चैव ॥ ३६ ॥

[II] अर्हत्सिद्धचैत्यश्रुतं च धर्मे च साधुवर्गे च । आचार्ये उपाध्याये प्रवचने दर्शने विनयः ॥ ३७ ॥ अर्हन्त·—विहरन्तः सिद्धा.—कर्मक्षये शिवं प्राप्ताः । प्रतिमाश्चैत्यानि श्रुतमिति सामायकादिकम् ॥ ३८ ॥ धर्म चारित्रधर्म आचारस्तस्य साधुवर्ग इति । आचार्या उपाध्याया विशेषगुणसंगतास्तत्र ॥ ३९ ॥ प्रवचनम् अशेषमद्ध दर्शनमिच्छन्ति अत्र सम्यक्त्वम् । विनयो ऽशानामेषां कर्तव्यो भवत्येवं तु ॥ ४० ॥ भक्तिर्बहुमानो वर्णज्वलनं अकरणमवर्णवादस्य । आशातनापरिहारो, विनय सक्षेपत एष ॥ ४१ ॥

वग्गे य। आयरियउवज्झाए, पवयणे दंसणे विणओ ॥३७॥ अरिहंता विहरंता, सिद्धा कम्मक्खए सिवं पत्ता। पडिमाउ चेइयाइं सुयंति सामाइयाईयं ॥३८॥ धम्मो चरित्तधम्मो, आहारो तस्स साहुवग्गत्ति। आयरियउवज्झाया, विसेसगुणसंगया तत्थ ॥३९॥ पवयण-मसेससंघो, दंसणमिच्छंति इत्थ सम्मत्तं। विणओ दसण्हमेसिं, कायव्वो होइ एवं तु ॥ ४० ॥ भत्ती बहुमाणो वण्णसंजलणम-करणमवन्नवायस्स। आसायणपरिहारो, विणओ संखेवओ एसो ॥४१॥ इति विनयः। तथा व्यावृतस्य भावो वैयावृत्त्यं, यतः—

* वेयावच्चं वावडभावो इह धम्मसाहणनिमित्तं। साहम्मियकुलगणसंघसंगयं तमिह कायव्वं ॥ ४२ ॥ स्वाध्यायः पञ्चधा वाचना १ पृच्छना २ परावर्त्तना ३ अनुप्रेक्षा ४ धर्मकथा ५ रूपतः, तथाऽऽर्त्त १ रौद्र २ धर्म ३ शुक्ल ४ ध्यानभेदाद्ध्यानं चतुर्धा, यत—राज्योपभोगशयनासनवाहनेषु, स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु। इच्छाऽभिलाषमतिमात्रमुपैति मोहाद्, ध्यानं तदार्त्तमिति तत्प्रवदन्ति धीराः ॥ ४३ ॥ संछेदनैर्दहनभञ्जनमारणैश्च, बन्धप्रहारदमनैर्विनिकृन्तनैश्च। ये यान्ति रागमुपयान्ति न चानुकम्पां, ध्यानं तु रौद्रमिति तत्प्रवदन्ति धीराः ॥४४॥ सूत्रार्थसाधनमहाव्रतधारणेषु, बन्धप्रमोक्षगमनागमहेतुचिन्ता। पञ्चेन्द्रियव्युपरमश्च दया च भूते, ध्यानं तु धर्म्यमिति तत्प्रवदन्ति धीराः ॥ ४५ ॥ यस्येन्द्रियाणि विषयेषु पराङ्मुखानि, संकल्पकल्पनविकल्पविकारदोषैः। योगैः सदा त्रिभिरहो निभृतान्तरात्मा, ध्यानोत्तमं प्रवरशुक्लमिदं वदन्ति ॥ ४६ ॥ आर्त्ते तिर्यग्गतिस्तथा गतिरधो ध्याने तु रौद्रे सदा, धर्मे देवगतिः शुभं बहुफलं शुक्ले तु जन्मक्षयः। तस्माद्व्याधिरुगन्तके हितकरे संसारनिर्वाहके, ध्याने शुक्लवरे रजःप्रमथने



* वैयावृत्यं व्यापृतभावः इह धर्मसाधननिमित्तम्। साधर्मिककुलगणसङ्घसंगतं तदिह कर्तव्यम् ॥ ४२ ॥

१ [illegible]

कुर्यात्प्रयत्नं बुधः ॥ ४७ ॥ तथा-आर्त्तस्मृतेः प्रापदपापकोऽपि, मण्डूकतां सेडुकनामविप्रः । श्रीवीरनामश्रवणात्प्रणामध्यानं विनाऽधोगतिमन्वयास्यत् ॥ ४८ ॥ रौद्रस्मृतेस्तण्डुलनाममीनो, हिंसादिदुष्कर्म विनापि याति । असंख्यदुष्कर्मकरालभूतं, तमेव भूयो नरकं दुरन्तम् ॥ ४९ ॥ दुर्ध्यानसंतानमहानिदानमाहुः कषायान् विषयान्मुनीन्द्राः । पार्श्वेऽपि ते सन्ति सदैव दुर्ध्यानं तदाधिस्यभयं नराणाम् ॥ ५० ॥ तेनागमानाममृतं निपीतं, शुश्रूषिताः सद्गुरवश्च तेन । पञ्चेन्द्रियार्थाश्चतुरः कषायानेके-सवीरानपि यो जिगाय । ॥ ५१ ॥ द्रव्यभावाभ्यां व्युत्सर्गो द्विधा, तत्र द्रव्यतश्चतुर्धा-गणशरीरोपध्याहारत्यागतः, भावतोऽनेकधा क्रोधादिपरित्यागरूपः, यतः-× दव्वे भावे य तहा, दुहा उसग्गो चउविहो दव्वे । गणदेहोवहिभत्ते, भावे कोहाइचाओत्ति ॥ ५२ ॥ अष्टोच्छ्वासमानदेहोत्सर्गस्यापि ज्ञानोपयोगयुक्तस्यैतत्फलं भवति-§ एगूणवीसं लक्खा, तेसट्ठिसहस्स दुसयसत्तट्ठी । पलियाइं देवाउं, बंधइ नवकारउस्सग्गे ॥ ५३ ॥ एकस्मिन्नपि चतुर्विंशतिस्तवकायोत्सर्गे फलं यथा-* लक्खिगसट्ठी पणतीस-

---

१ आर्त्तध्यानात् २ अप्रतिष्ठानाख्यम् ३-४ चकारो गम्यः

× द्रव्ये भावे च तथा द्विधा व्युत्सर्गश्चतुर्विधो द्रव्ये । गणदेहोपधिभक्तेषु, भावे क्रोधादित्याग इति ॥ ५२ ॥

§ एकोनविंशतिर्लक्षाः त्रिषष्टिः सहस्राणि द्विशताधिका सप्तषष्टिः । पल्योपमानां देवायुर्बध्नाति नमस्कारकायोत्सर्गे ॥ ५३ ॥

* एकषष्टिर्लक्षाः पञ्चत्रिंशत्सहस्राणि द्वे शते ध्यधिके ( पल्योपमानां देवायुः ) बध्नात्यधिकं जीवः पञ्चविंशत्युच्छ्वासकायोत्सर्गे ॥ ५४ ॥ काले-गणदेहयो अतिरिक्तासुद्धभक्तपानान म् । क्रोधानां मननं कर्त्तव्यो भवति त्याग इति ॥ ५५ ॥

सहस्स दुसयदुअपलिअदेवाउं । बंधइ अहियं जीवो, पणवीसूसासउस्सग्गे ॥ ५४ ॥ काले गणदेहाणं, अइरित्तासुद्धभत्तपाणाणं । कोहाइयाण सययं, कायवो होइ चाओत्ति ॥ ५५ ॥ षड्विधान्तरतपांसि धारयन्, यस्त्रिधा भवति तत्त्वजागरः । संयमस्य च शमस्य साधकस्तस्य न स्युरिह भाववैरिणः ॥ ५६ ॥ इत्यभ्यन्तरं तपः । एवंविधद्वादशविधतपोवन्तस्तपस्विनस्तेषु भक्तिः, तथा –पूर्वक्ष्माधराकाराास्ते जीयासुस्तपस्विनः । यत्रोदेति तपोभास्वान्, द्वादशात्मा तमश्छिदः ॥ ५७ ॥ आमर्षौषधिमुख्याः स्युर्यत्तपो-महिमोदयात् । भूयस्यो लब्धयस्ते स्युः, श्रेयसे श्रीतपस्विनः ॥ ५८ ॥ तेषां तपस्विनां शुद्धैर्भक्तपानैर्महौषधैः । वस्त्रपात्रादिदानैश्च, वात्सल्यं विदधाति यः ॥ ५९ ॥ स तत्प्रभावतो लक्ष्मीं, तार्त्तीयिकभवेऽर्हतः । प्राप्य सिद्धिपदं यायाद्वीरभद्रमहेभ्यवत् ॥ ६० ॥ तथाहि—नगरी श्रीविशालाऽस्त्यवन्तिमण्डलमण्डनम् । पूज्यन्ते कौतुकं यस्यां, सैकलत्रा महर्षयः ॥ ६१ ॥ तस्यां वृषभदासोऽभूद्, भूतार्त्तिहरणोद्यतः । श्रेष्ठी सनन्दनैः श्रीमाञ्चन्नतो मेरुवत्क्षितौ ॥ ६२ ॥ तस्यासीद्दयिता वीरमती भाग्यवती सती । तयोः सूनुरनूनश्रीर्वीरभद्राभिधोऽजनि ॥ ६३ ॥ विज्ञानेषु समग्रेषु, कलासु सकलास्वपि । कौशलं कुशली भेजे, स पुनर्यौवनोदये ॥ ६४ ॥ इतश्च पद्मिनीखण्डपत्तने परमार्हतः । श्रेष्ठी सागरदत्तोऽभूद्, भूरिभूतिर्महेशवत् ॥ ६५ ॥ सम्यग्दृ-ष्टिशिरश्चूडारत्नेनाद्भुततेजसा । रत्नगर्भाऽभवन्नूनं, यथार्था श्रेष्ठिनाऽमुना ॥ ६६ ॥ तदीयतनया वीरभद्रेण प्रियदर्शना । श्रीगुर्वा-

१ ज्ञानावरणादिध्वान्तच्छेदित्वात् २ सर्वजन्तुरक्षकाः कौतुकार्थे कलत्राणि स्त्रियः ३ नन्दनं—वनं नन्दन—पुत्रः ४ पक्षे गम्भीरः उच्चत्वयुक्तो वा ५ पक्षे ह्रानावपि. ६ सौम्ययुक्तः २ मातापित्रायानामाज्ञायाः

देशनः पाणौ, चक्रेऽतिप्रियदर्शनः ॥ ६७ ॥ सर्वाङ्गसुखदायिन्या, संगतः प्रियया तया । वीरभद्रोऽन्यदा दध्यौ, श्वशुरौकःस्थितः सुधीः ॥ ६८ ॥ कलासु कौशलं मेऽत्र, पुरे स्वजनशालिनि । विफलं सकलं जातं, दुर्भगाभरणं यथा ॥ ६९ ॥ ततो विदेशमासाद्य, स्वकलोत्कर्षसंपदः । फलं ग्राह्यं मया कल्पलताया इव निर्भ्रमम् ॥ ७० ॥ ततो निर्गाद्य सौख्येन, कतिचिद्दिवसानसौ । प्रियालापैः प्रियां पुण्यां, सन्मान्य प्रियदर्शनाम् ॥ ७१ ॥ आत्मपुण्यपरीक्षार्थं, गुटिकायाः प्रयोगतः । कृत्वा रूपान्तरं प्रापद्, द्वीपे सिंहलनामनि ॥ ७२ ॥ युग्मं । शङ्खश्रेष्ठिगृहे तत्र, पवित्रे वज्रपाणिवत् । सुखेन पुत्रवत्तस्थौ, कलाकौशलदर्शनात् ॥ ७३ ॥ तत्र रत्नाकरक्षोणीभर्तुः सौन्दर्यशालिनीम् । अनङ्गसुन्दरीं नाम, सुतां विज्ञानविश्रुताम् ॥ ७४ ॥ श्रुत्वा श्रेष्ठिमुखाम्भोजाद्योगिनोदयमन्यराम् । गुटिकाभावतो योषिद्रूपं निर्माय कौतुकात् ॥ ७५ ॥ शङ्खस्यात्मजया सार्कं, द्रष्टुं सस्पृहमानसः । राजवेश्म ययौ वीरभद्रोऽन्येद्युर्वराकृतिः ॥ ७६ ॥ विभिर्विशेषकं । वीणायास्तत्करस्थाया, नादं कृत्वा सुधाश्रवम् । तत्क्षणाद्रञ्जयामास, वीरभद्रो वशीकृतिः ॥ ७७ ॥ राजकन्याऽपि तद्रूपं, निरूप्य प्रीतिमत्तरा । सगौरवं निजे पार्श्वे, स्थापयामास तं पुनः ॥ ७८ ॥ तत्र स्थितवता तेन, तादृग्रूपवता सुखम् । गीतनृत्यकथोदन्तकलाभिः प्रीणिता सती ॥ ७९ ॥ स्वस्वरूपं परिज्ञाप्य, क्रमाद् भूमिभृदात्मजया । जाग्रत्पुण्यानुभावेन, परिणिन्ये कृतोत्सवम् ॥ ८० ॥ युग्मं । अथालेख्य जिनेन्द्रस्य, प्रतिमाश्चित्रपट्टके । तथा रूपाणि साधूनां, दर्शं दर्शमनेकशः ॥ ८१ ॥ वसन्नसौ नृपावासे, सम्यग्धर्मनिवेदनात् । क्रमा-

१ सम्यक्त्व २ गृहम् ३ असाधारणं ४ प्रसिद्धाम् ५ पुत्र्या ६ मार्गम् ७ वनिताख्य. ८ अभीक्ष्ण दर्शयित्वा

दार्हतधर्मेशां, चकारानङ्गसुन्दरीम् ॥ ८२ ॥ युग्मं । कृतोनर्तपगुणग्रासे, निवासे श्वशुरौकसः । श्रीमतोऽपि किमन्यस्य, महिमा हीयते ध्रुवम् ॥ ८३ ॥ यतः—उत्तमाः स्वगुणैः ख्याता, मध्यमाश्च पितुर्गुणैः । अधमा मातुलैः ख्याताः, श्वशुरैश्चाधमाधमाः ॥ ८४ ॥ इति ध्यात्वा नृपादेशादादायानङ्गसुन्दरीम् । महेभ्यं शङ्खमापृच्छ्य, प्रतिपत्तिपुरस्सरम् ॥ ८५ ॥ यानपात्रं समारुह्य, निभृतं सारवस्तुभिः । वीरभद्रः प्रशस्तेऽह्नि, प्रतस्थे स्वपुरं प्रति ॥ ८६ ॥ दुर्दैवोदयतस्तोयेनिधौ दुर्वातयोगतः । पोतोऽभज्यत वेगेनापुण्यस्येव मनोरथः ॥ ८७ ॥ सद्दर्शनमिवासाद्य, फलकं नृपतेः सुता । उत्तीर्य तटिनीनाथं, तटं माप त्रिभिर्दिनैः ॥ ८८ ॥ कश्चित्कुलपतिः प्रेक्ष्य, तां दयाऽऽर्द्रमनास्ततः । आनीय पालयामास, स्वाश्रमे पुत्रिकामिव ॥ ८९ ॥ नवीनयौवनोन्मादसौरभाद्भुतविग्रहाम् । तां निरीक्ष्यान्यदा दध्यौ, स्वान्तेऽसौ तापसाग्रणीः ॥ ९० ॥ सर्वाङ्गचङ्गसौभाग्यनिर्मूलाया नतभ्रुवः । नास्याः सङ्गो गुणाऽऽघाथी, यतीनां ब्रह्मचारिणाम् ॥ ९१ ॥ यतः—मदिराया गुणज्येष्ठा, लोकद्वयविरोधिनी । कुरुते दृश्यमानापि, महिला ग्रहिलं जगत् ॥ ९२ ॥ यथाऽग्निसंनिधानेन, लाक्षाद्रव्यं विलीयते । धीरोऽपि कृशकायोऽपि, तथा स्त्रीसंनिधौ नरः ॥ ९३ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो लोलपक्ष्माण एते, यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ ९४ ॥ एवं विमृश्य पूतात्मा, ततः कुलपतिः स्वयम् । समीपे पद्मिनीखण्डपत्तनस्य मुमोच ताम् ॥ ९५ ॥ यूथेश्वरपरिभ्रष्टा,



---

१ महिमाभक्षणं २ हस्तिप्रमाणधनयुक्तश्रीमदश्रेष्ठिनः ३ प्रणामादिपूर्वकम् ४ दुष्कर्म. ५ समुद्रे ६ कायः

मृगीव तरलेक्षणा । इतस्ततो भ्रमन्ती सा, पुरीपरिसरे क्षणम् ॥ ९६ ॥ विलोक्य सुव्रतां नाम, गणिनीं सुकृतोदयात् । साध्वीरूपपरिज्ञानाद्ववन्दे सा तपस्विनीम् ॥ ९७ ॥ युग्मं । कस्यासि तनया वत्से !, कस्य वा सहचारिणी । गणिन्येत्युदिताऽवादीत्, सा स्वरूपं यथास्थितम् ॥ ९८ ॥ तद्वृत्तान्तं परिज्ञाय, सा साध्वीभिरुपाश्रये । आनीय शिक्षिता दक्षा, धर्मं श्रीअर्हतोदितम् ॥९९॥ आस्तिकीकृतसान्निध्या, तत्र सा नृपनन्दिनी । पठन्ती पुण्यशास्त्राणि, प्रापद् धृतिमनुत्तराम् ॥१००॥ शमामृतरसास्वादान्मुदिता सा दिने दिने । श्रुतज्ञानोपयोगेन, क्लिष्टकर्मक्षयं व्यधात् ॥ १ ॥ यतः— * जं अन्नाणी कम्मं, खवेइ बहुआहिं वासकोडीहिं । तं नाणी तिहिं गुत्तो, खवेइ ऊसासमित्तेणं ॥ २ ॥ तत्रान्यदा तथारूपां, तां वीक्ष्य प्रियदर्शना । स्वामिन्येषाऽस्ति का योपेत्यवादीत्संयतीश्वरीम् ॥ ३ ॥ सोवाच तामसौ भद्रेऽमिधयाऽनङ्गसुन्दरी । श्रेष्ठिनो वीरभद्रस्य, सिंहलेश्वरनन्दिनी ॥ ४ ॥ सपत्नीति ततो ज्ञात्वा, तद्गिरा प्रियदर्शना । प्रीता प्रीतिसुधासारमुग्वाचा तामतोषयत् ॥ ५ ॥ ततस्तस्याः पितुर्गेहे, तिष्ठन्ती सा तदाग्रहात् । सुखेन कुरुते धर्मं, चतुर्थान्तरभुक्तिभृत् ॥ ६ ॥ ते उभे संयतीमुख्यां, विश्रुतिं शीललीलया । प्राप्नुतस्तत्र पौरेषु, गुणसौरभधारिषु ॥ ७ ॥ श्रेष्ठी सागरदत्तोऽपि, सुकृती स्वसुतामिव । सारनेपथ्यभोज्याद्यैः, प्रीणयामास तामपि ॥ ८ ॥ इतश्चोन्निद्रसमुद्रोदयेन फलकाश्रितः । तीरं सप्तदिनैर्वार्द्धेर्वीरभद्रोऽपि लब्धवान् ॥ ९ ॥ पूगालवङ्गकर्पूरकदलीचारुचारुषु । वेलाकुलेषु स भ्राम्यन्, रतिं नाप्तत्तया विना ॥ १० ॥ अथ रत्नपुरस्वामी, खेचरो रत्नवल्लभः । तत्र क्रीडार्थमायातस्तमालोक्य कलोज्ज्वलम्

१ श्राविरा० २ उत्कृष्ट० ३ ०चारुकुली०

* यदज्ञानी कर्म क्षपयति बहुकाभिर्वर्षकोटीभि । तज्ज्ञानी त्रिभिर्गुप्त क्षपयति उच्छ्वासमात्रेण ॥ ४ ॥

॥ ११ ॥ आनीय स्वगृहेऽसौ च, सूनुवत्कृतगौरवम् । स्थापयामास यन्नूनं, सर्वत्र सुकृती सुखी ॥ १२ ॥ स्वकीयं दुहितासेति, तत्र नाम प्रकाशयन् । रत्नप्रभां गुणक्रीतां, पाणौ चक्रे तदङ्गजाम् ॥ १३ ॥ अथ विद्याधराधीशो, विद्यां गगनगामिनीम् । आभोगिन्या समं तस्मै, जामात्रे प्रददौ मुदा ॥ १४ ॥ दशोपवासतपसा, साधयित्वा जिनाग्रतः । विद्याद्वन्द्वं पवित्रात्मा, सोऽभू- द्विद्याधरस्तत्र ॥ १५ ॥ नत्वा नत्वा जिनेन्द्राणां, मूर्तीस्तत्रानुवासरम् । स रत्नप्रभया सार्कं, श्रीसिद्धायतनादिषु ॥ १६ ॥ विद्या- चारणसाधूंश्च, सेवं सेवं स्वभक्तितः । सम्यक्त्वं निर्मलीचक्रे, फलं लेभे च जन्मनः ॥ १७ ॥ आभोगिन्या परिज्ञाय, विद्यया स प्रियायुगम् । सुव्रतासंयतीपार्श्वे, स्थितं निर्मलशीलयुग् ॥ १८ ॥ अहानि कतिचित्तत्र, भुञ्जानः पञ्चधा सुखम् । समं तया समु- त्तस्थौ, देवो दोगुन्दुको यथा ॥ १९ ॥ युग्मं ॥ वीरभद्रोऽन्यदा तत्र, पद्मिनीखण्डपत्तने । सप्रियः कौतुकेनागात्, प्रियायुग्मदिदृक्षया ॥ २० ॥ सुव्रतोपाश्रयाऽऽसत्तौ, मुक्त्वा तामपि स प्रियाम् । देहचिन्तामिषात् क्वापि, वामनीभूय जग्मिवान् ॥ २१ ॥ भ्रमन्ती साऽपि तत्पुण्यात्, सुव्रताया उपाश्रयम् । प्राप्ता ताभ्यां समं तस्थौ, तत्र धर्मोद्यता सुखम् ॥ २२ ॥ सोऽपि सूक्तैः सुधासारैर्गी- तैर्नृत्यैश्च कौतुकैः । अप्रीणत्पुरे तत्र, पौरलोकं पदे पदे ॥ २३ ॥ अथ रत्नप्रभानङ्गसुन्दरीप्रियदर्शनाः । तुल्यदुःखतया भेजुः, प्रीतिं निस्त्रोऽपि ता मिथः ॥ २४ ॥ पठन्ति पुण्यशास्त्राणि, साध्वीनां सन्निधौ समम् । ताः पूजयन्ति प्रतिमां, त्रिवेलं त्रिजगद्गुरोः ॥ २५ ॥ भक्त्या सुपात्रदानेन, सुसाधुपदवन्दनैः । पोषाऽऽवश्यककृत्यैश्च, ता भजन्ति जनुःफलम् ॥ २६ ॥ संतुष्टेन क्षितीशेन, तद्विज्ञानकलादिभिः । दत्त्वा प्रसादमस्यापि, सोऽपि वामनरूपवान् ॥ २७ ॥ विदधे कौतुकी कश्चिदन्यदा नृपपर्षदि । तासां तत्र वधूनां, सतीनामिति संस्तुतिम् ॥ २८ ॥ धर्मध्यानस्थिरस्वान्ताः, साध्वीनां सन्निधौ स्थिताः । पठन्त्यः पुण्यशास्त्राणि,

स्वात्मपाविण्यहेतवे ॥ २९ ॥ समानाकारसौन्दर्या, विषयेषु पराङ्मुखाः । तिस्रोऽत्र प्रमदाः सन्ति, मुक्तनर्मकुतूहलाः ॥ ३० ॥
न कदाचन जल्पन्ति, पुम्भिरालापिता अपि । मौनवत्यो महासत्यो, यौवनेऽपि जितेन्द्रियाः ॥ ३१ ॥ त्रिभिर्विशेषकं । तत्
श्रुत्वा विस्मितः स्माह, तदा संसदि भूपतिः । यः कश्चिज्जल्पयत्येतास्तस्य यच्छामि वाञ्छितम् ॥ ३२ ॥ वामनेन तदाऽवा-
दि, सदर्पमिति संसदि । भाषणीया मया तिस्रोऽप्येताः पश्यत कौतुकम् ॥ ३३ ॥ ततो नरवरादेशात्, संयतीनामुपाश्रये ।
आगत्य यतिनीः सर्वा, नत्वा द्वारि निविष्टवान् ॥ ३४ ॥ कथां कथय साश्चर्यां कामपीति भणोदितः । पूर्वसंकेतितैः पुम्भिः,
सोऽपि तानित्यभाषत ॥ ३५ ॥ अभूद् वृषभदासाख्यविशालावासिनः सुतः । वीरभद्रः कलाशाली, पद्मिनीखण्डपत्तने ॥ ३६ ॥
सागरस्य सुतां त्यक्त्वा, स प्रियां प्रियदर्शनाम् । क्वाप्यगादिति साद्यन्तं, स्वमेव चरितं जगौ ॥ ३७ ॥ तन्मुखादिति ताः श्रुत्वा,
स्वस्य निश्चित्य चेतसि । एकवल्लभसंवादं, मुदिता वामनं जगौ ॥ ३८ ॥ वीरभद्रः स कुत्रास्ति, साम्प्रतं वद वामन ! ।
सोऽप्याख्यत्र पल्लीभिर्युवेऽहं पृच्छयतां परः ॥ ३९ ॥ कथञ्चिदुपलक्ष्याथ, तमेव दयितं निजम् । श्यामत्वं वामनत्वं च, ता
जवेन व्यमोचयन् ॥ ४० ॥ ततः सागरदत्तेन, श्वशुरेण सगौरवम् । आनीय स्थापितो गेहे, निजेऽसौ सौख्यमन्वभूत् ॥ ४१ ॥
यथा साधुः क्षमामैत्रीकृपाभिर्भूषितो भवेत् । जगतो भूषणं ताभिः, स प्रियाभिस्तथा पुरः ॥ ४२ ॥ तत्स्वरूपं परिज्ञाय, नृपति-
र्विस्मिताशयः । प्रसन्नहृदयस्तस्मै, प्रसादं विदधेऽनवम् ॥ ४३ ॥ अरनाथोऽन्यदा तत्र, श्रीमानष्टादशो जिनः । सर्वज्ञः समवासार्षीत्,
सेव्यमानः सुरासुरैः ॥ ४४ ॥ वीरभद्रः स्वपत्नीभिः, सागरेण च संयुतः । तत्रागत्य जगन्नाथं, त्रिःपरीत्य नमोऽकरोत् ॥ ४५ ॥

१ निस्य. प्रदक्षिणा दत्त्वा

सर्वभाषानुगामिन्या, सुधामधुरया गिरा । भगवान् विदधे धर्मदेशनां तत्र तद्यथा ॥ ४६ ॥ मानुषं भवमवाप्य दक्षिणावर्त्तशङ्खवद्‌भ्रमं भवाम्बुधौ । पूरयेत्सुकृतगाङ्गवारिणा, पापवृत्तिसुरया न चोत्तमः ॥ ४७ ॥ सुरासुराणां सर्वेषां, मानुष्यमतिदुर्लभम् । तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा ॥ ४८ ॥ धर्मो जगति सारं सर्वसुखानां प्रधानहेतुत्वात् । तस्योत्पत्तिर्मनुजात् सारं तेनैव मानुष्यम् ॥ ४९ ॥ मानुष्यं यः समासाद्य, स्वर्गापवर्गसाधकम् । द्वयोर्न साधयत्येकं, स मृतस्तप्यतेऽधिकम् ॥ ५० ॥ जीवाः सुखैषिणः सर्वे, तन्मोक्षे मुख्यमक्षयम् । तच्च ज्ञानक्रियाभ्यां स्यात्तद्यत्नं तत्र भो जनाः ! ॥ ५१ ॥ धर्मोपदेशनामेवं, विधाय विरतेऽर्हति । प्रणम्य सागरः श्रेष्ठी, प्राञ्जलिस्तं व्यजिज्ञपत् ॥ ५२ ॥ अमुना वीरभद्रेण, जामात्राऽथ जिनेश्वर ! । कीदृक् प्राच्यभवे पुण्यं, निर्ममे[1] मे निवेदय ॥ ५३ ॥ आदिदेश जिनाधीशस्तमेवं श्रेष्ठिपुङ्गवम् । इतो भवे तृतीयेऽभूत्, पुरे रत्नपुराभिधे ॥ ५४ ॥ जिनदासाभिधः श्राद्धः, श्रद्धावान्निर्धनोऽपि हि । धर्मार्थी व्यवहारेण, सत्यपूतधनार्जकः ॥ ५५ ॥ अन्यदा स ददौ दानं, चतुर्मासोपवासिने । भक्त्याऽनन्तजिनेन्द्राय, शुचिशुद्धान्नपानयोः ॥ ५६ ॥ द्वादशस्वर्णकोटीनां, तदा वृष्टिः सुरैः कृता । वेश्मन्यानन्दितैस्तस्य, ततोऽसौ धनवानभूत् ॥ ५७ ॥ तद्दानार्जितपुण्येन, ब्रह्मलोके सुराधिपम् । प्राप्यासौ वीरभद्रोऽभूदीदृशां संपदां पदम् ॥ ५८ ॥ सुपात्रे श्रद्धया दानं, स्वल्पमप्यद्भुतं फलम् । पुण्यानुबन्धिपुण्यत्वाद्दत्ते शिवसुखावधि ॥ ५९ ॥ श्रद्धया साध्यते धर्मो, न महद्भिर्धनोत्करैः । निष्किञ्चना हि मुनयः, श्रद्धावन्तो दिवं ययुः ॥ ६० ॥ सर्वस्वं जीवितं वापि, दत्तमश्रद्धया नरैः । निष्फलं जायते सर्वं, तुषाणां वपनं यथा ॥ ६१ ॥ अकृत्वा परसंतापमगत्वा खलभारताम् । अनुत्सृज्य

१ विदो

सतां मार्गे, यदल्पमपि तद्वहु ॥ ६२ ॥ अत्रान्तरे नमस्कृत्य, वीरभद्रो जिनं जगौ । कियद्भोगफलं स्वामिन्नद्यापि मम वर्तते ॥ ६३ ॥ वर्षाणां विंशतिर्भद्र !, दानभोगफलं तव । ततो भोगफले क्षीणे, तपस्या ते भविष्यति ॥ ६४ ॥ इत्याकर्ण्य जिनेन्द्रोक्तं, वीरभद्रो जिनाधिपम् । प्रणम्यागान्निजं वेश्म, सागरश्रेष्ठिना समं ॥ ६५ ॥ स्थित्वा कतिपयान्येव, दिनान्यथ सगोत्रम् । वेश्मनि श्रेष्ठिनस्तस्य, सुखास्वादैर्नवैर्नवैः ॥ ६६ ॥ साधर्मिकेषु वात्सल्यमर्हद्भक्तिपुरस्सरम् । निर्माय भूभुजादेशात्, सागरानुमतेस्तदा ॥ ६७ ॥ त्रिधापि सकलत्रोऽसौ, प्राप्तवान् स्वपुरं ततः । निर्ममे जनकेनोच्चैरुत्सवानां परम्परा ॥ ६८ ॥ आराध्य पितरौ तत्र, तीर्थवद् हार्दभक्तितः । चक्रे फलैर्ग्रहिरवेन, श्रीमता गृहमेधितां ॥ ६९ ॥ विविधत्पुण्यतीर्थेषु, सम्मेताष्टापदादिषु । वीरभद्रस्य साहाय्यान्नत्वा नत्वा जिनेश्वरान् ॥ ७० ॥ आराध्य निरतीचारां, देशतो विरतिं तथा । क्रमतः पितरौ तस्य, देवभूयमुपेयतुः ॥ ७१ ॥ युग्मं । ततः श्रेष्ठिपदं प्राप्य, प्रसादान्मेदिनीभुजः । वीरः क्षीरयशाश्चक्रे, परोपकृतिसंततिम् ॥ ७२ ॥ कैलासगिरिसंकाशं, प्रासादं परमार्हतः । अचीकरत्पुरे तत्र, स्वर्णकोटिव्ययादयम् ॥ ७३ ॥ वीरदेववीरदत्तवीरचन्द्राभिधाः क्रमात् । अजायन्त सुतास्तस्य, प्रियाणां तिसृणामपि ॥ ७४ ॥ पुत्रर्येषु समर्थेषु, तेषु न्यस्य पदं निजम् । प्रियाभिस्तिसृभिः साकं, वीरभद्रो विरक्तवान् ॥ ७५ ॥ श्रीसमुद्रगुरोः पार्श्वे, सर्वश्रुतपयोदधेः । तपस्यामाददे श्रेष्ठिस्तैः पश्चभिरन्वितः ॥ ७६ ॥ पालयन् संयमं सम्यक्, पठन् पूर्वगतं श्रुतम् । तपस्विनामसौ भक्तेरप्रीतिफलमन्यदा ॥ ७७ ॥ * सव्वेसिं पयडीणं । परिणामवसा

१ सवीरः सवंशः कलत्रजाता इति त्रिधा० २ फलवती० ३ गृहस्थता ४ देवभाव० ५ परमश्रावक०
६ वैराग्यमासवान्० ७ दीक्षाम्० * सर्वासां प्रकृतीनां परिणामवशादुपक्रमो भवति । प्रायोऽनिकाचितानां तपसा तु निकाचितानामपि ॥

उवक्कमो होइ । पायमनिकाइयाणं, तरसा उ निकाइयाणंपि ॥ ७८ ॥ विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः । तैरेव फल-मङ्गस्य, जगृहे तत्त्ववेदिभिः ॥ ७९ ॥ तपःप्रभावतो नैका, लब्धयः स्युर्महात्मनाम् । तेजोलेश्यादयो घोरा, दुस्सहा सुरादामपि ॥ ८० ॥ त एव मुनयो धन्या, मान्याश्च जगतामपि । दुस्तपं यैस्तपस्तप्तं, निःस्पृहाशयवृत्तिभिः ॥ ८१ ॥ क्षेत्रकालाविरोधे-नाशनपानौषधादिभिः । शुद्धैस्तपस्विनां भक्तिं, कुरुते छद्मनोज्झितः ॥ ८२ ॥ राजहंसीव तीर्थेशलक्ष्मीरागामिजन्मनि । तस्य लीलायते पाणिपङ्कजे जगदद्भुता ॥ ८३ ॥ युग्मं ॥ महर्षिर्वीरभद्रोऽथ, श्रुत्वेति स्वगुरोर्वचः । तपस्वियतिवात्सल्याभिग्रहं जगृहे सुधीः ॥ ८४ ॥ ततस्तपस्विनां भक्तपानकादीनि भक्तितः । आनीयानीय सर्वेषां, दत्ते चित्तेप्सितानि सः ॥ ८५ ॥ वैयावृत्त्यं व्यधात्तेषां, वपुर्विश्रामणादिभिः । प्रायोग्यदधिदुग्धादिसारवस्तून्यढौकयत् ॥ ८६ ॥ युग्मं ॥ नवकल्पविहारेण, विहरन् गुरुणा समम् । शालिग्रामेऽन्यदा प्रापद्वीरभद्रमहामुनिः ॥ ८७ ॥ मासोपवासिनस्तत्र, पुण्येनातिथिपुङ्गवाः । सूरयो मुनिचन्द्राख्याः, प्रापुर्निष्पापचेतसः ॥ ८८ ॥ भक्तितः स्थापयित्वा तान्, पारणार्थं गुरून् मुनिः । स्वयं प्रायोग्यभिक्षार्थं, तदासन्ने पुरे ययौ ॥ ८९ ॥ अतिक्रम्यान्तरालस्थां, नदीं संक्रमणाध्वना । गुरुप्रायोग्यभक्तादि, विहृत्योऽऽशु पुरात्ततः ॥ ९० ॥ स पश्चाद्यावदा-याति, गुरुभक्तितराङ्कित. । दुरुत्ताराऽभवत्तावत्, पयःपूरेण सा सरित् ॥ ९१ ॥ अशक्तः शीघ्रमायातुं, ततोऽसौ जगदे जनैः । मुनेऽयं सरित. प्रश्चिरस्थायी दुरुत्तरः ॥ ९२ ॥ अत्रैव भोजनं तेन, विधेहि विजने क्वचित् । पश्चात्तापं ततस्तन्वन्निति चिन्ताः मुनिर्व्यधात् ॥ ९३ ॥ युग्मं ॥ ममैव भाग्ययोगेन, प्राप्ता मासोपवासिनः । गुरवोऽतिथयो ज्येष्ठाः, पारणार्थं स्थितास्तथा

१ देवानां० २ शीघ्रम्० ३ नदी० ४ कुर्वन्०

॥ ९४ ॥ तादृक्पुण्योदयाभावाद्दरिद्रो रैयोल्वणः । विधत्तेऽद्यान्तरायं मे, कुर्वेऽहं किमतःपरम् ? ॥ ९५ ॥ प्रायः पुण्यात्मनामेव, पारणार्थं तपस्विनाम् । भवेत्सद्वस्तुसामग्री, सफला सिद्धिसाधनम् ॥ ९६ ॥ परर्निशता गुरुस्गुणैर्गुरुः पूर्वविद्ग्रणीः । अतिथिः प्राप्यते पुण्योदयादेव तपोनिधिः ॥ ९७ ॥ इत्यादिभावनां तस्य, साधोर्भावयतस्ततः । आविर्बभूव हृष्टात्मा, लवणाधिपतिः सुरः ॥ ९८ ॥ तं नमस्कृत्य संहृत्य, सरित्पूरं स्वयंकृतम् । स स्वागः क्षमयामास, पप्रच्छेति गुरुं पुनः ॥ ९९ ॥ भावनां भावयंस्तेन, किं फलं प्राप्तवान्मुनिः ? । गुरुराख्यत्सुरप्रेष्ठस्तीर्थकृत्कर्म निर्मलम् ॥ १०० ॥ सर्वेषु धर्मकार्येषु, तपोदानार्चनादिषु । यादृग्भावो भवेज्जन्तोः, स तादृक् फलमश्नुते ॥ १ ॥ यतः—ज्ञाने ध्याने दाने, मौने देवार्चने तथा तपसि । यदि निर्मलो न भावस्तदा हुतं भस्मनि समग्रम् ॥ २ ॥ ततस्तं सद्गुरुं हृष्टो, नत्वाऽऽगात्स्वपदं सुरः । पारणं कारयामास, स पुनर्भक्तितो गुरून् ॥ ३ ॥ एवं तपस्विवात्सल्यं, निर्मायामायया मुनिः । आराध्य संयमं स्वर्गे, देवोऽभूदच्युते क्रमात् ॥४॥ आगामिनि भवे भावी, वात्सल्येन तपस्विषु । विदेहे तीर्थकृद्वीरभद्रो भद्रङ्करः सताम् ॥ ५ ॥ श्रीतीर्थकृत्पदविधायितपस्विवर्गवात्सल्यपुण्यपदवीमधिगम्य सम्यग् । श्रीवीरभद्रमुनिवद्विधिना विधेयं, स्थानं हि सप्तममिदं शिवसौख्यहेतुः ॥ ६ ॥

## इति सप्तमस्थानके वीरभद्रश्रेष्ठिकथानकम् ॥

अथाष्टमस्थानके विवेकिना भूरिनरक्लिष्टकर्मनिर्जराकारणत्वान्निखिलसदनुष्ठानसंपूर्णफलदायी प्रतिक्षणं ज्ञानोपयोगो विधेयः,

१ वेगवान्० २ स्थापयाम्० ३ मुषवत् मुनीनाम०

यत.—क्षपयेन्नारकः कर्म, बह्वीभिर्वर्षकोटिभिः । यत्तदुच्छ्वासमात्रेण, ज्ञानीयुक्तस्त्रिगुप्तिमान् ॥ १ ॥ [1] छट्ठट्ठमदसमदुवालसेहिं अबहुसुअस्स जा सोही । इत्तो अ अणेगगुणा, सोही नाणिस्स जिमिअस्स ॥ २ ॥ सम्यग्ज्ञानोपयोगेन, स्वात्मतत्त्वविचारिणाम् । नृणां जीर्यन्ति कर्माणि, दुर्जराण्यपि तत्क्षणात् ॥ ३ ॥ इत्यर्हत्प्रणीतक्रियासु ज्ञानोपयोग एव महानिर्जराकारण, तद् ज्ञानं पुनर्मतिश्रुतावधिमन.पर्यायकेवलज्ञानैः पञ्चप्रकारं, तत्र मतिज्ञानमष्टाविंशतिभेदं, तद्यथा—व्यञ्जनावग्रहो मनोनयनवर्जनाच्चतुर्धा, अर्थावग्रहेहापायधारणानां प्रत्येकं पञ्चेन्द्रियमनसां संबन्धित्वेन षड्विधतया चतुर्विंशतिधा, इत्यष्टाविंशतिविधं मतिज्ञानं, तथा सामान्येन चतुर्दशभेदं श्रुतज्ञानं अक्षरसंज्ञिसम्यक्सादिसपर्यवसानगमिकाङ्गप्रविष्टरूपप्रकारैः सप्रतिपक्षैर्भवति, अनुगामिवर्द्धमानप्रतिपातिरूपभेदैः सप्रतिपक्षैः कृत्वा षड्विधमवधिज्ञानं, ऋजुमतिविपुलमतिभेदाभ्यां द्विविधं मन.पर्यायज्ञानं, सकलावरणव्यपगमादेकविधं केवलज्ञानं, अत्र च स्वपरोपकारितया श्रुतोपयोगाधिकारः, यतः—मूकं ज्ञानचतुष्टयं स्वविषयं नैवाभिधातुं क्षमं, दक्षं चात्मपरप्रकाशनविधौ सम्यक्श्रुतं दीपवत् । तद्दाने ग्रहणे श्रुतस्य न पुनः शेषाणि कश्चित्क्षमो, दातुं ज्ञानवराणि निर्मलगुणप्रासानपि प्राणभृत् ॥ ४ ॥ तत्र श्रुतं बद्धाबद्धभेदाभ्यां द्विविधं, यत.— [×] बद्धमबद्धं तु सुअं, बद्धं तु दुवालसंगि निद्दिट्ठं । तव्विवरीयमबद्धं, निसीहमनिसीह बद्धं तु ॥५॥ बद्धं तु सूत्रार्थतदुभयप्रकारैः पुनस्त्रिधा, ततस्तेन श्रुतज्ञानेन सर्वत्रोपयोगिना सकल-



[1] षष्ठाष्टमदशमद्वादशभक्तै अबहुश्रुतस्य या शुद्धि । इतश्चानेकगुणा शुद्धिर्ज्ञानयुक्तस्यजिमितस्य ॥ २ ॥

[×] बद्धमबद्धं तु श्रुतं बद्ध तु द्वादशाङ्गी निर्दिष्टा । तद्विपरीतमबद्ध निशीथमनिशीथं बद्ध तु ॥ ५ ॥

शर्येषु सावधानता, 'अनुपयोगो द्रव्य' मिति वचनादुपयोगं विना सर्वानुष्ठानं द्रव्यरूपतां भजति अतः सम्यक्सूत्रार्थोपयोगपूर्वं सततं सदनुष्ठानं विधिनाद्विधेयं, यतः—सम्यक्श्रुतोपयोगेन, द्रव्यक्षेत्राद्यनुसारतः । यो विधत्ते क्रियाकाण्डताण्डवाडम्बरं सुधीः ॥ ६ ॥ जयन्तदेवराजर्षिरिवासाश्च जगद्धिताम् । स श्रीतीर्थकृतो लक्ष्मीं, लभते सिद्धिसंपदम् ॥७॥ युग्मम् । तथाहि—जयन्तदेवनामाऽऽसीन्, सीमा भत्यर्पिजेतॄषु, भूपतिर्मथितारातिः, कौशाम्ब्यां पुरि विश्रुतः ॥८॥ दरिद्रान् सृजतो धातुः, कृतार्थान् कुर्वतोऽर्थिनः । परस्परं विवादोऽभूद्, भूभर्तुर्यस्य सर्वदा ॥ ९ ॥ पुरीपरिसरोद्यानदीर्घिकास्वनुर्वासरम् । सान्तःपुरः स्फुरत्तेजा, मीनध्वजं इवाङ्गवान् ॥ १० ॥ चन्दनागुरुकर्पूरकस्तूरीभरसौरभैः । परितः परिपूतासु, जलकेलिं करोत्यसौ ॥ ११ ॥ युग्मं ॥ अन्यदाऽसौ विशांमीशो, जलकेलिं पयाम्बि । विनिर्माय निजावासमागच्छन्नन्तराऽध्वनि ॥ १२ ॥ कुर्वतः कनकाम्भोजे, निविष्टान् धर्मदेशनाम् । अपश्यद्विश्ववन्द्यान्दर्शान्, यशोदेवमुनीश्वरान् ॥ १३ ॥ युग्मं ॥ उत्तमत्वात्समुत्तीर्य, गर्वादिव करीटिनः । तान्नमस्कृत्य भूजानिरग्रोजानुरुपाविशत् ॥ १४ ॥ दत्त्वाऽऽशीर्वादमानन्दाद्, गुरुः कल्पतरुः सताम् । सुधासारमुचा वाचा, विदधे धर्मदेशनाम् ॥ १५ ॥ ज्ञानाद्विदन्ति खलु कृत्यमकृत्यजातं, ज्ञानाच्चरित्रममलं च समाचरन्ति । ज्ञानाच्च भव्यभविनः शिवमाप्नुवन्ति, ज्ञानं निदानमखिलोत्तमशर्मलक्ष्म्याः ॥ १६ ॥ अज्ञातस्याजया हा धिग्, देहभाजश्चराचराः । स्वीकृत्य भूमिकास्तास्ता, भवरङ्गे नटन्त्यमी ॥ १७ ॥

---

१ तनुजघनशालिषु २ निर्मथितशत्रुः ३ विशायरम्य ४ विधेः ५ मार्गणान् ६ प्रतिदिवसं ७ कामः ८ नगर्यां ९ इन्द्रिय १० नृपः ११ भव्यजीवा.

अज्ञाना एव बहवो, दृश्यन्ते ज्ञानिनोऽल्पकाः । यथा तारापथे ताराः, स्युस्तथा नेन्दवो निशि ॥ १८ ॥ क्षणं रक्ता विरक्ताश्च, क्षणं सर्वेषु वस्तुषु । अज्ञानेनैव कार्यन्ते, प्राणिनः कपिचापलम् ॥ १९ ॥ अज्ञानतिमिरग्रस्ता, विषयामिषलम्पटाः । भ्रमन्ति शतशो जीवा, नानायोनिषु दुःखिताः ॥ २० ॥ श्रुत्वेति नृपतिः स्माह, प्रणम्य मुनिपुङ्गवम् । भगवन्नहमज्ञानी, ज्ञानवान् वा निवेद्यताम् ॥ २१ ॥ गुरुः प्रोवाच राजेन्द्र !, भवान् भर्त्ता भुवोऽनिशम् । आस्तामज्ञानिनः प्रायः, सन्ति केचित्सुरा अपि ॥ २२ ॥ मृत्युं मृतं जरां जीर्णान्, व्याधींश्च व्याधितान् हृदि । मत्वैवं निर्भरं वल्गन्, कथं ज्ञानी भवेज्जनः ? ॥ २३ ॥ विषयैश्वर्यांकुलीभावं, ज्ञानवानपि चेद्व्रजेत् । अज्ञानिज्ञानिनोर्लोके, को विशेषस्तदा भवेत् ? ॥ २४ ॥ ततः संजातसंवेगः, श्रीजयन्तक्षितीश्वरः । जयवर्माभिधं न्यायधर्माध्वनि धुरन्धरम् ॥ २५ ॥ अनुजं मनुजैश्वर्ये, पदे संस्थाप्य सोत्सवम् । शिश्राय संयमारामममिरामं गुरोर्गिरा ॥ २६ ॥ पालयन्निरतीचारं, चारित्रं स यतिस्ततः । बभाण द्वादशाङ्गानि, सूत्रार्थोभयभेदतः ॥ २७ ॥ परं चारित्रयोगेषु, मोहकर्मानुभावतः । सातगौरवमग्नोऽसौ, प्रमादी समजायत ॥ २८ ॥ + चउदसपुवी आहारगा य मणनाणिणो वीयरागा य । हुंति पमायपरवसा, तयणंतरमेव चउगईया ॥ २९ ॥ मज्जं विसयकसाया, निद्दा

---

१ लघुभ्रातरं० २ राज्ये०

+ चतुर्दशपूर्विणः आहारकाश्च मनोज्ञानिनो वीतरागाश्च । भवन्ति प्रमादपरवशास्तदनन्तरमेव चतुर्गतिकाः ॥ २९ ॥ मद्यं विषयाः कषाया निद्रा विकथा च पञ्चमी भणिता । एते पञ्च प्रमादा जीवं पातयन्ति संसारे ॥ ३० ॥

निरुहा य पचमी भणिया । एए पंच पमाया, जीवं पाडन्ति संसारे ॥ ३० ॥ इत्यागमरहस्यानि, निवेद्य गुरुणा ततः । प्रत्य-बोधि जयदेव, सुरासुरगुणसिन्धुना ॥ ३१ ॥ यतः—सुखेन बोध्यते ज्ञानी, नैवाज्ञानी पुमान् क्वचित् । अयत्नान्मार्गमायाति, चक्षुष्मानेतरः पुनः ॥ ३२ ॥ ततः प्रमादं निःशेषं, विधूय व्यस्तसत्क्रियम् । जयन्तदेवराजर्षिः, स जग्राहेत्यभिग्रहम् ॥ ३३ ॥ अतः परं मया ज्ञानोपयोगो हि प्रतिक्षणम् । विधेयो विकथानिद्राकषायादिविवर्जनात् ॥ ३४ ॥ ततः संयमयोगेषु, राजर्षि-र्निखिलेष्वपि । ज्ञानोपयोगमातन्वन्, यथाकालं व्यधात्क्रियाः ॥ ३५ ॥ सम्यक्त्रिगुप्तिगुप्तात्मा, श्रुतज्ञानोपयोगवान् । भारण्ड-वत्क्रियाकाण्डमप्रमत्तोऽनिशं सृजन् ॥ ३६ ॥ स मुनिर्नाकिनाथेन, विस्मयाश्रितचेतसा । कृत्वा स्वर्गाङ्गनारूपं, दिव्याभरणभूषि-तम् ॥ ३७ ॥ हारभावैर्नवनवैर्यौवनोन्मादमेदुरैः । नाक्षुभ्यत् क्षुभ्यमाणोऽपि, निष्प्रकम्पः सुमेरुवत् ॥ ३८ ॥ त्रिभिर्विशेषकं ॥ निर्माया गो ततो रूपं, विप्रस्यातिगरीयसः । संनिधौ तस्य राजर्षेरप्राक्षीदायुरात्मनः ॥ ३९ ॥ सम्यग्ज्ञानोपयोगात्मा, तं मुनिः प्राह वासवम् । सागरोपमयुग्मं ते, नूनमायुस्ततः परम् ॥ ४० ॥ निगोदाः कीदृशाः सन्ति, श्रीजिनेन्द्रमते मुने ! । इतीन्द्रेणो-दिते प्रोचे, तत्स्वरूपमसौ यथा ॥ ४१ ॥ * गोला अ असंखिज्जा, असंखनिग्गोअओ हवइ गोलो । इक्किक्कंमि निगोए, अणंतजीवा मुणेयव्वा ॥ ४२ ॥ समयं वक्कंताणं, समयं तेसिं सरीरनिप्पत्ती । समयं आणग्गहणं, समयं ऊसासनीसासा

---

* गोलकाश्च असंख्येया असंख्यनिगोदो भवति गोलकः । एकैकस्मिन् निगोदे अनन्ता जीवा ज्ञातव्याः ॥ ४२ ॥ समकं व्युत्क्रमता समकं तेषां शरीरनिर्वृत्तिः । समकमानग्रहणं, समकमुच्छ्वासनिःश्वासौ ॥ ४३ ॥ साधारण आहारः साधारणमानपानग्रहणं च । साधारणजीवानां साधारण-

॥ ४३ ॥ साहारणमाहारो, साहारणमाणपाणगहणं च । साहारणजीवाणं, साहारणलक्खणं एयं ॥ ४४ ॥ जह अयगोलो धंतो, जाओ तत्ततवणिज्जसंकासो । सव्वो अगणिपरिणओ, निगोअजीवो तहा जाण ॥ ४५ ॥ इक्कस्स दुण्ह तिण्हवि, संखिज्जाण व न पासिउं सक्का । दीसंति सरीराइं, निगोअजीवाणऽणंताणं ॥ ४६ ॥ लोगागासपएसे, निगोअजीवं ठवेइ इक्किक्कं । एवं मविज्जमाणा, हवंति लोगा अणंता उ ॥ ४७ ॥ तथा—लोए असंखजोअणमाणे पइजोअण अंगुला संखा । पइ तं असंखअंसा, पइ अंसअसंखया गोला ॥ ४८ ॥ गोलु असंखनिगोओ, सो अणंतजिओ जियं पइ पएसा । असंख पइपएसं, कम्माणं वग्गणाणंता ॥ ४९ ॥ पइवग्गणं अणंता, अणुअ पइअणु अणंतपज्जाया । एवं लोगसरूवं, भाविज्ज तहत्ति जिणवुत्तं ॥ ५० ॥ इत्याकर्ण्य निगोदानां, विचारं तद्गिरा ततः । प्रीतस्वान्तः सुराधीशः, प्रत्यक्षीभूय तत्क्षणात् ॥ ५१ ॥ जयन्तदेवराजर्षिं, त्रिःपरीय[1] प्रणम्य

---

लक्षणमेतत् ॥ ४४ ॥ यथाऽयोगोलको ध्मातो जातस्तप्ततपनीयसंकाशः । सर्वोऽग्निपरिणतो निगोदजीवस्तथेति जानीहि ॥ ४५ ॥ एकस्य द्वयोस्त्रयाणामपि न द्रष्टुं शक्यानि संख्येयानामपि । दृश्यन्ते शरीराणि निगोदजीवानामनन्तानाम् ॥ ४६ ॥ लोकाकाशप्रदेशेषु, निगोदजीव स्थापयैकैकम् । एवं मीयमाना भवन्ति लोका अनन्ता एव ॥ ४७ ॥ लोके असंख्ययोजनमाने प्रतियोजनमङ्गुलानि असंख्येयानि । प्रतितत् ( अङ्गुलं ) असंख्या अंशाः प्रत्यंशमसंख्या गोलकाः ॥ ४८ ॥ गोलोऽसंख्यनिगोदः सोऽनन्तजीवो जीवं प्रति प्रदेशाः। असंख्याः प्रतिप्रदेशं कर्मणां वर्गणा अनन्ताः ॥ ४९ ॥ प्रतिवर्गणं अनन्तानन्ता अणुकाः प्रत्यणु अनन्ताः पर्यायाः । एवं लोकस्वरूपं भावयेत् तथेति जिनोक्तमिति ॥ ५० ॥

१ प्रदक्षिणात्रयं कृत्वा

च । गुरुं विज्ञपयामास, प्राञ्जलिर्जनितस्तुतिः ॥ ५२ ॥ युग्मं । ज्ञानोपयोगतोऽनेन, किमासादि फलं विभो ! अर्जितं तीर्थकृत्कर्म, निश्छद्मेति जगौ गुरुः ॥ ५३ ॥ ततः प्रणम्य राजर्षिं, सुपर्वेशो दिवं ययौ । नित्यं ज्ञानोपयोगेन, स सर्वत्र व्यधात्क्रियाम् ॥ ५४ ॥ क्रमादाराध्य चारित्रं, महाशुक्रे सुरोऽजनि । ततश्च्युतो विदेहेऽर्हन्नसौ भावी जगद्गुरुः ॥ ५५ ॥ एवं जयन्तक्षितिपालवृत्तं, कर्णातिथीकृत्य कृतप्रमोदम् । ज्ञानोपयोगे सततं विधेयो, यत्नो यथा तीर्थकरत्वमेति ॥ ५६ ॥

## इत्यष्टमस्थानके जयन्तदेवराजर्षिकथानकं संपूर्णं ।

*अथ नवमस्थानकाधिकारः—तत्र सम्यग्दर्शनं त्रिधा शुद्धं पालनीयं, तच्च यथाऽवस्थितदेवगुरुधर्मसम्यक्श्रद्धानरूपं, यतः—*
[1] अरिहं देवो सुगुरू, सुसाहुणो जिणमयं मह पमाणं । इच्चाइ सुहो भावो, सम्मत्तं बिंति जगगुरुणो ॥ १ ॥ तच्चानेकधा परिणामविशेषाद्भवति, यथा—एगविहदुविहतिविहं, चउहा पंचविहं दसविहं सम्मं ॥ एगविहं तत्तरुई, निस्सग्गुवएसओ भवे दुविहं खइयं खओवसमियं, उवसमियं इइ तिहा नेयं ॥ २ ॥ खइआइ सासणजुअं, चउहा वेयगजुअं च पंचविहं दशधा त्वेवं—निस्सग्गुवएसरुई, आणरुई सुत्तबीअरुइमेव । अभिगमवित्थाररुई, किरियासंखेवधम्मरुई ॥ ४ ॥ तत्रैव प्राप्तिक्रमो

---

[1] अर्हन् देवः सुगुरुः सुसाधवः जिनमतं मम प्रमाणम् । इत्यादि शुभो भावो जगद्गुरवो ब्रुवते सम्यक्त्वं ॥१॥ एकविधं द्विविधं त्रिविधं चतुर्धा पञ्चविधं दशविधं सम्यक्त्वम् । एकविधं तत्त्वरुचिः, निसर्गोपदेशतो भवेद्द्विविधम् ॥२॥ क्षायिकं क्षायोपशमिकं औपशमिकं इति त्रिधा सम्यक्त्वम् । क्षायिकादि सास्वादनयुतं चतुर्धा वेदकयुतं च पञ्चविधम् ॥ ३ ॥ निसर्गोपदेशरुची आज्ञारुचिः सूत्रबीजरुची एव । अभिगमविस्ताररुची क्रिया-

यथा—सुइर भवेसु भमिउ, पाय चरिममि पुग्गलपरट्टे । सन्निपार्णिदियपज्जत्तओ य वड्ढनपरिणामो ॥ ५ ॥ मोहे कोडाकोडी, सत्तरी वीस नामगोयाण । तीस अयराण चउण्ह, तित्तीसयराइ आउस्स ॥ ६ ॥ इय कम्मुक्कोसठिई, पलियअसखराहीणअयराण । कोडाकोडिं इक्क, मुत्तु सयल खविय सेस ॥ ७ ॥ गिरिसरिउवलनिहेण, जीवो अ अहापवत्तिकरणेण । अणभोगवत्तिएण, आगच्छइ गठिदेसमि ॥ ८ ॥ गठित्ति सुदुब्भेओ, कक्खडवणरूढगूढगठिव । जीवस्स कम्मजणिओ, घणरागद्दोसपरिणामो ॥ ९ ॥ इत्थ य अणतखुत्तो, आगतु अभवियावि पावति । दव्वसुअ न उ सम्म, पुणरवि बधंति जिट्ठठिइ ॥ १० ॥ भव्य पुन—भिंदिय अपुव्वकरणेण त च अनिअट्टीकरणओ तत्तो । अतरकरण काउ, करेइ मिच्छस्स ठिइजुअल । ॥ ११ ॥ अतमुहुत्तपमाण, हिट्ठिल्लठिइ खवेइ सुहभावो । अतरकरणद्धाए, पढमे समयमि वट्टतो ॥ १२ ॥ ऊसरदेस दड्ढिल्लिय च विज्झाइ

---

सक्षेपप्रमेरुच्य ॥ ४ ॥ सुचिर भवेषु भ्रान्त्वा, प्रायश्चरमे पुद्गलपरावर्ते । सज्ञिपञ्चेन्द्रियपर्याप्तश्च वर्धमानशुभपरिणाम ॥ ५ ॥ मोहे कोटिकोट्य सप्ततिर्विंशतिर्नामगोत्रयो । त्रिंशच्चातराणि चतुर्णां त्रयस्त्रिंशदतराण्यायुष ॥६॥ इति कर्मणामुत्कृष्टा स्थितय पल्यासख्येयहीनाऽनराणा । कोटीकोट्यरा मुक्त्वा सर्व क्षपयित्वा शेषम् ॥ ७ ॥ गिरिसरिदुपलनिभेन जीवश्च यथाप्रवृत्तकरणेन । अनाभोगनिर्वर्त्तितेनागच्छति ग्रन्थिदेशम् ॥८॥ ग्रन्थिरिति सुदुर्भेद कर्कशघनरूढगूढग्रन्थिरिव । जीवस्य कर्मजनितो घनरागद्वेषपरिणाम ॥ ९ ॥ अत्र चानन्तकृत्व आगत्य अभव्या अपि प्राप्नुवन्ति । द्रव्यश्रुत न तु सम्यक्त्व पुनरपि बध्नन्ति ज्येष्ठस्थितिम ॥ १० ॥ भित्त्वाऽपूर्वकरणेन त चानिवृत्तिकरणतस्तत । अन्तरकरण कृत्वा करोति मिथ्यात्वस्य स्थितियुगलम ॥ ११ ॥ अन्तर्मुहूर्त्तप्रमाणामधस्तना स्थितिं क्षपयति शुभभाव । अन्तरकरणाद्धाया प्रथमे समये वर्त्तमान ॥ १२ ॥ ऊषरदेश

वणदवो पप्प । इय मिच्छस्स अणुदए, उवसमसम्मं लहइ जीवो ॥ १३ ॥ उवसमसम्मत्ताओ, चइउं मिच्छं अपावमाणस्स । सासायणसम्मत्ते, तयंतरालंमि छावलियं ॥ १४ ॥ तउ पडिवडंनसम्मो, मिच्छमपत्तो स होइ सासाणो । अहवा उवसमसम्मी, करेइ मिच्छस्स पुंजतिगं ॥ १५ ॥ परिणामविसेसेणं, पओगओ मयणकुद्दवाणं व । सुद्धो अद्धविसुद्धो, अविशुद्धो तत्थ पढमंमि ॥ १६ ॥ वट्टंतो वं खओवसमी, बीए मीसो अ तईयए मिच्छी । मिच्छमवड्ढपुग्गलपरट्ट छावट्ठयर संमं ॥ १७ ॥ अंतमुहुत्तं मीसं, उक्कोस जहन्नओ अ सयाणि । पणवारा उवसमियं, असंखवारा खओवसमिअं ॥ १८ ॥ कलुसंबु खओवसमी, पसन्नसलिलं व उवसमियसंमी । खाइयसम्मद्दिट्ठी, विन्नेओ विमलसलिलं व ॥ १९ ॥ खओवसमोवसमियसंमाणं भन्नए अह विसेसं । उवसमगो नो वेयइ, पएसओ वावि मिच्छत्तं ॥ २० ॥ उक्कोसं सासायणउवसमिया हुंति पंचवाराउ । वेयगखइगा इक्कासि असंखवारा खओव-

---

दग्धं च निःप्राप्य वनदवः प्राप्य । इति मिथ्यात्वस्यानुदये औपशमिकसम्यक्त्वं लभते जीवः ॥ १३ ॥ औपशमिकसम्यक्त्वात् च्युत्वा मिथ्यात्वमप्राप्य । सास्वादनसम्यक्त्वं तदन्तराले षडावलिकाः ॥ १४ ॥ ततः परिपतत्सम्यक्त्वो मिथ्यात्वमप्राप्तः स भवति सास्वादनः । अथवौपशमिकसम्यक्त्ववान् करोति मिथ्यात्वस्य पुञ्जत्रिकम् ॥१५॥ परिणामविशेषेण प्रयोगतो मदनकोद्रवाणामिव । शुद्धोऽर्धविशुद्धोऽविशुद्धस्तत्र प्रथमे ॥१६॥ वर्तमानः क्षायोपशमिको द्वितीये मिश्रश्च तृतीये मिथ्यादृष्टिः । मिथ्यात्वमपार्धपुद्गलपरावर्तं षट्षष्टयतरं सम्यक्त्वम् ॥१७॥ अन्तमुहूर्तं मिश्रमुत्कृष्टतो जघन्यतश्च सर्वाणि । पञ्चवारान् औपशमिकमसंख्यवारान् क्षायोपशमिकम् ॥१८॥ कलुषाम्बु क्षयोपशमी प्रसन्नसलिलवत् औपशमिकसम्यक्त्ववान् । क्षायिकसम्यक्त्ववान् विज्ञेयो विमलसलिलवत् ॥ १९ ॥ क्षायोपशमिकौपशमिकसम्यक्त्वयोर्भण्यतेऽथ विशेषः । औपशमिको न वेदयति प्रदेशतो वापि मिथ्यात्वम् ॥२०॥ उत्कृष्टः सास्वादनौपशमिके भवतः पञ्चवारान् । वेदकक्षायिकावेकवारं असंख्यवारान् क्षायोपशमिक ॥२१॥ सम्यक्त्वे च लब्धे

समी ॥ २१ ॥ सम्मत्तमि य लद्धे, पलियपहुत्तेण सावओ हुज्जा। चरणोवसमखयाणं, सागर सखतरा हुंति ॥ २२ ॥ दुत्तार दूरतीरे, फुडिए जाणमि मज्जमाणस्स। पुरिसस्स जलहिमज्झे, जह फलयासायण सरणं ॥ २३ ॥ तह संसारसमुद्दे, दुत्तारे दुसह जलहिगंभीरे। जीवस्स होइ सरणं, संमत्तासायण चेव ॥ २४ ॥ जह दुक्काले काले, असणविहीणस्स कस्सवि नरस्स। छुहियस्स होइ सहसा, परमन्नं किंपि पुन्नेहिं ॥ २५ ॥ तह दूसमए काले, पमायबहुलस्स जीववग्गस्स। दुहियस्स होइ सहसा, सम्मत्तं अमयनिस्संदं ॥ २६ ॥ चिंतामणी मणीणं कप्पतरू तरुवराण जह पवरो। तह सम्मत्तं पवरं, भणियं सव्वाणवि गुणाणं ॥ २७ ॥ क्षायोपशमिकं सम्यग्दर्शनं क्षायिकं तथा। चिन्तारत्नमिवासाद्य, दुर्लभं भववारिधौ ॥ २८ ॥ बिभर्ति हृदि यः शुद्धं, पञ्चातीचारवर्जनात्। हरिविक्रमवत्तस्य, विश्वविश्वातिशायिनी ॥ २९ ॥ जिनेन्द्रपदवी राजहंसीव करपङ्कजे। लीलास्ते सदानन्दपदसंपत्सहोदरी ॥ ३० ॥ त्रिभिर्विशेषकं ॥ तद्यथा—अत्राभूद् भरतक्षेत्रे, हस्तिनागपुरे पुरे। हरिषेणो

भुवो भर्त्ता, भूयसां महसां पदम् ॥ ३१ ॥ निष्णातो जिनपूजायां, न दीनः साधुसेवने । सम्यक्त्वेऽतिस्थिरस्वान्तो, यो जज्ञे सद्गुरोर्गिरा ॥ ३२ ॥ तस्य सीमन्तिनीसीमा, गौरीनाम प्रियाऽजनि । तयोश्च तनयो जज्ञे, विक्रमी हरिविक्रमः ॥ ३३ ॥ पितुरादेशतो राजकन्या धन्याङ्गसंपदः । नृपसूनुः क्रमेणैष, द्वात्रिंशतमुदूढवान् ॥ ३४ ॥ भुञ्जानः स सुखी ताभिः, समं वैषयिकं सुखम् । अहानि गमयामास, स्वर्वासीव कियन्त्यपि ॥ ३५ ॥ अथाष्टौ तस्य कुष्ठाद्या, दुष्कर्मोदययोगतः । रोगा भोगारयः प्रादुरासन् देहेऽतिदुस्सहाः ॥ ३६ ॥ आक्रन्दं कुरुते घोरं, ततो रङ्क इवानिशम् । सर्वाङ्गे पीडितो रोगै, राजसूः रतिवर्जितः ॥ ३७ ॥ वैद्या विद्याविदश्चक्रुरुपचाराननेकशः । जज्ञुस्ते विफलास्तस्मिन्, कुपात्रे दानवत्परम् ॥ ३८ ॥ धनञ्जयाभिधानस्य, यक्षस्याक्षततेजसः । पुराधिष्ठायकत्वेन,[1] विख्यातस्याखिले जने ॥ ३९ ॥ ततस्तेन रुगावेगविवशीकृतचेतसा । गेने मिथ्यात्वमूढत्वात्, स्वयमेवोपयाचितम् ॥ ४० ॥ वपुर्वल्मीकतो मेऽमी, काद्रवेया इवामयाः । यक्षराज ! प्रयास्यन्ति, यदि त्वत्कानुभावतः ॥ ४१ ॥ तदा भक्तिं करिष्यामि, यात्रोत्सवपुरस्सरम् । पञ्चर्याशतेनाहं, तव सेवकवत्सल ! ॥ ४२ ॥ त्रिभिर्विशेषकं । तस्मिन्नवसरे तत्र, श्रीमांश्चन्द्रमुनीश्वरः । केवली समवासार्षीत्, सर्वजीवदयामय ॥ ४३ ॥ तदागमं तदाकर्ण्य, हरिषेणनरेश्वरः । आससाद महानन्दं, कलापीवाम्बुदध्वनिम् ॥ ४४ ॥ ततोऽसौ सूनुना तेन, समं तत्र पवित्रहृत् । आगत्य यतीनामीशं, विशामीशो नमोऽकरोत् ॥ ४५ ॥ राजसूनोर्जवात्तस्य, रुजः सर्वाः क्षयं ययुः । गुरोस्तस्यानुभावेन, रविणेव तमोऽत्ययः ॥ ४७ ॥ जिनपूजनमुनिवन्दनसुपात्रदानादिपुण्यकर्माणि । विहितानि भावपूर्वं, भवन्ति महते फलायाशु ॥ ४८ ॥

१ तेजसा० २ निमुख ० ३ जज्ञि० ४ रोग० ५ नागाः० ६ महिमा.०

ततस्तेषां प्रबोधाय, सर्वविद्गगनान्मुनिः । विदधे देशनामेव, सम्यग्धर्मसुधाश्रवाम् ॥ ४९ ॥ यदत्र क्रियते कर्म, तत्परत्रोपभुज्यते । मूलसिक्तेषु वृक्षेषु, फलं शाखासु जायते ॥ ५० ॥ यस्मिन् देशे यदा काले, वयसा यादृशेन च । कृतं शुभाशुभं कर्म, तत्तथा तेन भुज्यते ॥ ५१ ॥ यस्मात्पापेन दुःखानि, तीव्राणि विविधान्यपि । तस्मात्पापं न कर्तव्यं, परपीडाकरं क्वचित् ॥५२॥ पापेन कर्मणा जीवा, नरके यातनाश्चिरम् । अनुभूय भवन्त्यत्र, नानामयभरार्दिताः ॥ ५३ ॥ हिंसकाः सर्वसत्त्वानां, ये नराः पापवृत्तयः । ते सर्वे शतशो राजन् !, दुःखिताः स्युर्भवान्तरे ॥ ५४ ॥ दानैर्दयाभिरपि संयतदेवतार्हद्गुर्वर्चनाप्रणतिभिश्च जपैस्तपोभिः । इत्युक्तपुण्यनिचयैरुपचीयमानाः, प्राक्पापजा यदि रुजः प्रशमं प्रयान्ति ॥ ५५ ॥ अत्रान्तरे नमस्कृत्य, तं गुरुं नृपसत्तमौ । किमकारि मया पापं, प्रभो ! प्राक्तनजन्मनि ? ॥ ५६ ॥ यौवने प्राभवन् येन, रोगा भोगापहा मम । उवाच केवलज्ञानी, तमेवं करुणार्णवः ॥ ५७ ॥ प्राग्विदेहे भवानासीन्नृपतिः श्रीपुरे पुरे । पद्माक्षो नाम निर्धर्मा, कुकर्माऽऽरामसारणिः ॥ ५८ ॥ अन्यदा गच्छता तेन, पापर्द्धिव्यसनार्थिना । अदर्शि सुव्रतः साधुः, प्रपन्नप्रतिमः पथि ॥ ५९ ॥ तं मण्डूकमिवोत्क्षिप्य, कुन्तेन कुपितोऽधिकम् । पापात्मोच्छालयामास, विहायसि शमीश्वरम् ॥ ६० ॥ पतितश्च मुनिर्भूमौ, हतस्तेन दुरात्मना । विवेको न भवेत्प्रायो, जन्तोर्दुर्गतिगामिनः ॥ ६१ ॥ मन्त्रीशश्रेष्ठिसामन्तप्रमुखैः गौढपूरुषैः । ऋषिहत्यामहापापपूरपूरितविग्रहम् ॥ ६२ ॥ सुखप्राज्यात्ततो राज्यात्तं निष्कास्य नयोज्ज्वलः । तत्पुनः पुण्डरीकाक्षः, साम्राज्येऽस्थापि सोत्सवम् ॥ ६३ ॥ युग्मं । इतस्ततोऽन्यदा तेन, भ्रमता काननादिषु । मुनिं मारयितुं कोपादारब्धं दुष्टचेतसा ॥ ६४ ॥ साधुनाऽपि ततस्तेजोलेश्यया ज्वालितो नृपः । सप्तमे नरके जातो, नारकोऽनेकदुःखभाग् ॥६५॥ द्विर्द्विः स नारकीभूय, नरकेष्वखिलेष्वपि । कृष्णलेश्यो महापापैर्नितान्तं दुःखमन्वभूत्

॥ ६६ ॥ अनन्तशस्ततस्तिर्यग्जातौ दुष्कर्मयोगतः। अज्ञानी तीव्रदुःखार्त्तो, भ्रामं भ्राममयं पुनः ॥ ६७ ॥ अकामनिर्जरायोगात्, क्षपयित्वाऽय दुष्कृतम् । श्रेष्ठिनः सिन्धुदत्तस्य, सुतोऽभूद् गुणसुन्दरः ॥ ६८ ॥ तत्र युग्मम्। तस्याभवद् भद्रा, दीनाद्विषु दयालुता। अन्नदानैकनिष्ठस्य, धर्मबीजमनुत्तरम् ॥ ६९ ॥ प्रान्ते भोगपरित्यागात्तपरयां तापसीमसौ । तपोभिर्दम्भनिर्मुक्तैः, पालयामास दुःसहाम् ॥ ७० ॥ ततस्तत्पुण्ययोगेन, त्वमभूर्भूभुजोऽङ्गजः । अनङ्गाभङ्गसौभाग्यशाली श्रीहरिविक्रमः ॥ ७१ ॥ ऋषिहत्याशुभेनाथ, भुक्तशेषेण सम्प्रति । यौवनेऽप्यभवद्देहे, व्याधयस्तव दारुणाः ॥ ७२ ॥ यतः—दुःखं ददाति योऽन्यस्य, ध्रुवं दुःखं स विन्दति। तस्मान्न कस्यचिद् दुःखं, दातव्यं दुःखभीरुणा ॥ ७३ ॥ पापदः पापमाप्नोति, दाता लक्षगुणं ततः । तस्मान्न दद्यान्मेधावी, पातकं जातु कस्यचित् ॥ ७४ ॥ तत्त्वशुश्रूषया सम्यग्, मुनीनां वन्दनात्तथा । तच्छेषकर्म निःशेषं, तवाऽऽगात् साम्प्रतं क्षयम् ॥ ७५ ॥ कर्मणोवर्गणाः क्षीणा, असंख्याता यदाऽङ्गिनः । तदा सत्तत्त्वशुश्रूषा, भवेद् भव्यस्य भावतः ॥ ७६ ॥ सम्यक् सत्तत्त्वशुश्रूषापरिणामवतः सतः। क्षीयन्ते तत्क्षणाद् भूयो, वर्गणाः क्लिष्टकर्मणाम् ॥ ७७ ॥ मिथ्यात्वमोहनीयस्य, क्षयोपशमततः । उल्ललास रुचिरतस्य, धर्मे श्रीअर्हतोदिते ॥ ७७ ॥ सम्यक्त्वरत्नमासाद्य, गुरुरत्नाकरात्ततः। प्रमोदं परमं प्राप, नृपसूर्हरिविक्रमः ॥ ७८ ॥ सम्यक्त्वगुणदोषादिबोधार्थं तस्य केवली । श्रीगुरुर्विदधे धर्मदेशनाममृतप्रपाम् ॥ ७९ ॥ द्विविधस्यापि धर्मस्य, मूलं सद्दर्शनं स्मृतम् । तीर्थकृत्पदवीप्राप्तिनिमित्तं सिद्धिसाधनम् ॥ ८० ॥ अनन्तपुद्गलावर्त्तान्, भ्रामं भ्रामं भवार्णवे । कोटाकोट्यब्धितः शेषां, स्थितिं कृत्वाऽष्टकर्मणाम् ॥ ८१ ॥ अपार्द्धपुद्गलावर्तशेषायां तु भवस्थितौ । सम्यक्त्वं लभते प्राणी,

१ पानीयशाला

ग्रन्थिभेदे कृते सति ॥ ८२ ॥ युग्मम् । तदनेकविधं स्व्यातमनेकगुणभूषितम् । सत्यङ्कारोपमं मोक्षसपदः क्षायिकादिकम् ॥ ८३ ॥ इत्यादिदेशनां श्रुत्वा, प्रीतस्वान्तो नृपात्मजः । समहं गृहमागत्य, पश्चातीचारवर्जितम् ॥ ८४ ॥ सम्यक्त्वं पालयामास, निवासमखिलश्रियाम् । कुर्वन् सद्धर्मकृत्यानि, तद्विशुद्धिविधित्सया ॥ ८५ ॥ युग्मं ॥ जिनेन्द्रभक्तिर्मुनिपर्युपास्तिः, सत्तीर्थसेवा करुणाऽङ्गिवर्गे । श्रीसंघवात्सल्यमुदारवृत्त्या, सम्यक्त्वनैर्मल्यकृते कृतानि ॥ ८६ ॥ महिषोपयाचितं यक्षो, धनञ्जयस्तमन्यदा । याचते न परं दत्ते, स पुनर्जिनधर्मवित् ॥ ८७ ॥ धर्मबन्धून्नमस्कृत्यान्यदा साधून् वनस्थितान् । आगच्छन्तं निजावासं, कुमारं हरिविक्रमम् ॥ ८८ ॥ यक्षो निरीक्ष्य दुष्टात्मा, ज्वलन् क्रोधाग्निनाऽधिकम् । उत्पाट्य मुद्गरं घोरं, मारणार्थमधावत ॥ ८९ ॥ तदीयसुकृतोल्लासात्पुर एव स्थितः परम् । स पापः प्रार्थयामास, सैरिभेयोपयाचितं ॥ ९० ॥ अवादीत् सदयस्वान्तः, साहसी हरिविक्रम. । नाहं कुर्वे वधं जन्तोः, स्वप्राणान्तेऽपि कस्यचित् ॥ ९१ ॥ धिगस्तु तव. देवत्वं, मौढ्यैश्वर्यं धिगस्तु ते । जानन्नपि यतो जन्तुघातं वाञ्छसि दु.खदम् ॥ ९२ ॥ त एव स्तुत्यतां यान्ति, देवदानवमानवाः । यदीयं मज्जति स्वान्तं, कारुण्यक्षीरसागरे ॥ ९३ ॥ अहं तु केवलज्ञानिमुनीन्द्रस्य प्रसादतः । अभूवं रोगनिर्मुक्तस्तव नैव प्रभावतः ॥ ९४ ॥ ततो मुधा सुधास्वादिन् कुलस्त्वं तत्समीहसे ? । महिषैरात्मनोऽयुक्ता, प्रीतिर्दुर्गतिदायिनी ॥९५॥ इति तद्वचसा कर्णाऽऽम्रेडितेन निपीडितः । मुद्गरेण क्रुधा यक्षः, कुमारं तमताडयत् ॥ ९६ ॥ मूर्छयाऽसौ ततो भूमौ, छिन्नद्रुम इवापतत् । तथापि प्राणिहिंसायां, तन्मनो न मनागभूत् ॥ ९७ ॥ वनवातैः सतां स्वान्तैरिव शीततरैरसौ । मुक्तमूर्छः समुत्तस्थौ, सेवकानां समं मुदा ॥ ९८ ॥ आप-

१ महिष० २ देव०

यदि दयादार्ढ्यं, ज्ञात्वा तद्द् हृदि विस्मितः । देवोऽवग् तं सुतं वीर !, महिषैर्मे त्वदर्पितैः ॥ ९९ ॥ परं प्रणामं निर्माप, निर्मायमनसा मम । जीवन् याहि निजं वेश्म, नान्यया मुक्तिरस्ति ते ॥ १०० ॥ तमाख्यत् क्षितिभृत्पुत्रो, मिथ्यात्वतिमिरान्धलम् । नाहं देवं नमस्कुर्वे, जीवहिंसामलीमसम् ॥ १ ॥ नत्वाऽर्हन्तं जगन्नाथमन्यं को हि निनंसति ? । सद्यः सुधारसं पीत्वा, कः क्षाराम्भः पिपासति? ॥ २ ॥ परं यदि दयाधर्मं, धत्से सम्यक्त्वपूर्वकम् । तदानीं गौरवं कुर्वे, साधर्मिकतया तव ॥ ३ ॥ एवं तदुक्तिभिः शान्तस्वान्तः पीयूषवृष्टिभिः । यक्षोऽपि विगलत्कोपः, सम्यग्दृष्टिरजायत ॥ ४ ॥ सम्यग्धर्मानुभावेन, सोऽपि यक्षः प्रसत्तिमान् । तस्यानुचरवच्चक्रे, साहाय्यं सर्वकर्मसु ॥ ५ ॥ आसाद्य पैतृकं राज्यं, क्रमेण हरिविक्रमः । एकातपत्रमैश्वर्यं, जिनधर्मस्य निर्ममे ॥ ६ ॥ कलिङ्गविषयाधीशं, यमराजं यमोपमम् । निर्जित्य यक्षसाहाय्यादहार्यप्रभुतास्पदम् ॥ ७ ॥ जिनेन्द्रशासनं सौवशासनं च नयोज्ज्वलं । तस्मिन् देशे निधायासौ, महाराजोऽजनि क्रमात् ॥ ८ ॥ युग्मम् । जिनेन्द्रशासनात् स्थैर्यप्रमुखैः पञ्चभिर्गुणैः । सम्यक्त्वे निश्चलीचक्रे, स मनो मेरुवन्निजम् ॥ ९ ॥ सम्यग्दृशां प्रमोदार्थमथ तेनावनीभुजा । चक्रे तत्र जिनागारं, हैमं हैमाचलोपमम् ॥ १० ॥ विधाय विधिना तस्मिन्, चन्द्रकान्ताश्मनिर्मिताः । बिम्बे श्रीयुगादीशप्रतिमाः शतशो नताः ॥ ११ ॥ युग्मं ॥ सिद्धाचलोज्जयन्ताद्रिसम्मेतशिखरादिषु । भक्तितः पुण्यतीर्थेषु, पूजं पूजं जिनावलीम् ॥ १२ ॥ सम्यक्त्वं निर्मलीचक्रे, तथा श्रीहरिविक्रमः । मुनयोऽपि बभूवांसो, यथा तस्मै स्पृहालवः ॥ १३ ॥ युग्मं ॥ एकदाऽऽगाद् गुरुस्तत्र, राजा तं वन्दितुं ययौ । धर्मं श्रुत्वाऽग्रहीद्दीक्षां, पुत्रं राज्ये विवेश्य सः ॥ १४ ॥ ( पुत्रं विक्रमसेनाख्यं । विक्रमाक्रान्तशात्रवम् । क्रमेण स्वपदे न्यस्य, न्यायधर्माभिवृद्धये ॥ १ ॥ श्रीमच्चन्द्रमुनीन्द्रस्य, समीपे संयमश्रियम् । प्रपेदे

चङ्गसंवेगाद्धरिविक्रमभूपतिः ॥ २ ॥ युग्मम् इत्यपि पाठान्तरं) अध्यैष्ट द्वादशाङ्गानि, राजर्षिर्बीजबुद्धिमान् । ज्ञानपूर्वा क्रिया यस्मा-द्भवेत्सम्यक् शिवावहा ॥ १५ ॥ स्वगुरोर्देशनामेवमश्रौषीदन्यदा मुनिः । मतेऽत्र विंशतिस्थानतपस्तुल्यं तपो न हि ॥ १६ ॥ विधिनाऽऽराधितेनात्र, तपसाऽनेन सद्दृशः । अमुत्र निजगद्भर्तुर्लभन्ते पदमद्भुतम् ॥ १७ ॥ तत्रापि नवमे स्थाने, निदानं सर्वसंपदाम् । सद्दर्शनं त्रिधा शुद्धं, पालनीयं प्रयत्नतः ॥ १८ ॥ श्रुत्वेति नवमं स्थानं, कुर्वन् सर्वज्ञभक्तिभृत् । आचारैरष्टभिः शुद्धैः, सदा निःशङ्कितादिभिः ॥ १९ ॥ हरिविक्रमराजर्षिः, सर्वत्रौचित्यकृत्यवित् । निष्प्रकम्पमना जज्ञे, सम्यक्त्वे मेरुशृङ्गवत् ॥ २० ॥ अन्यदा श्रीपुरे प्राप्तं, राजर्षिं तं रजोऽतिगम् । अमरो भरतक्षेत्राधिष्ठाताऽनादृतः स्वयम् ॥ २१ ॥ सविस्मयमना मान्यं, सम्यक्त्वस्थिरतागुणैः । ससंभ्रमं समुत्थाय, नमश्चक्रे पुनः पुनः ॥ २२ ॥ युग्मं । तद्गुणाश्रद्दधानेन, देवो विश्वावसुस्ततः । छद्मना तत्र सार्थेशरूपेणागत्य ऋद्धिमान् ॥ २३ ॥ सुधाद्रवमुचा वाचा, वाचंयममुवाच तम् । मुक्त्वा क्लेशकरीं दीक्षामार्हतीं नीर-सामिमाम् ॥२४॥ कन्यामेतां गुणोपेतां, हेमकोटिसमन्विताम् । पाणीकृत्य मदादेशाद्देरमाश्रमनिवासभृत् ॥२५॥ भुङ्क्ष्व भोगाननङ्गा-र्त्तितापनिर्वापवाःप्रपाः । देशाङ्गभोगसामग्री, यतोऽसौ सुकृताद् भवेत् ॥२६॥ त्रिभिर्विशेषकम् । विरक्तो भवभोगेभ्यः, केनचिद्धेतुना यदि । अर्हन्मार्गमिमं मुक्त्वा, सूरिकष्टाल्पसौख्यदम् ॥ २७ ॥ बौद्धधर्मं सुखासेव्यं, महत्पुण्यफलप्रदम् । नानातिशयसंपन्नमङ्गीकुरु मुनीश्वर ! ॥ २८ ॥ युग्मम् । इत्यादिभोगयोगोक्तिदर्शनान्तरयुक्तिभिः । चाल्यमानोऽपि नाचालीदार्हतात्तेन वर्त्मनः ॥ २९ ॥ त्यक्त्वा

१ पानीयशाला  २ प्रभृति उत्तराध्ययनोक्ता  ३ मार्गात्

मायामसौ देवः, साक्षाद्भूय प्रमोदवान् । पुरो नाट्यविधिं दिव्यं, विधाय बहुभङ्गीभिः ॥३०॥ हरिविक्रमराजर्षि,सम्यक्त्वोज्ज्वलचेतसम् । प्रणम्य परया भक्त्या, निर्ममे स्वस्तुतेः पदम् ॥ ३१ ॥ धन्यस्त्वमेव राजर्षे !, श्लाघ्योऽसि मरुतामपि । यस्यातिशायिनी जैनधर्मे निश्चलतेदृशी ॥ ३२ ॥ अन्यतीर्थचमत्कारस्फुरद्वैभवदर्शनात् । जायते मूढदृष्टित्वं, प्रायः पूर्वविदामपि ॥ ३३ ॥ न परं भवतस्तत्रभवतो भोगतृष्णया । ममोक्तिप्रेरितस्यापि, दृग्मोहो न मनागभूत् ॥ ३४ ॥ राजर्षिमिति संस्तुत्य, नाकी प्राप निजं पदम् । सोऽपि सम्यक्त्वपूतात्मा, तीर्थकृत्पदमर्जयत् ॥ ३५ ॥ चारित्रं निरतीचारमाराध्य मुनिसत्तमः । द्वात्रिंशत्सागरायुष्को, देवोऽभूद्विजये क्रमात् ॥ ३६ ॥ विमानाद्विजयाच्च्युत्वा, महर्षिर्हरिविक्रमः । विदेहे पूर्वदिग्भागे, भविता जिनपुङ्गवः ॥ ३७ ॥ सम्यक्त्वकाञ्चनविशुद्धिकषोपलस्य, श्रुत्वा कथानकमिदं हरिविक्रमस्य । सद्दर्शने निजमनो दृढयन्तु सम्यग्, येन स्वयंवरतया जिनसंपदेति ॥ ३८ ॥

## इति नवमस्थानके श्रीहरिविक्रमनृपतिकथानकम् ॥

[1]अथ दशमस्थानके विवेकिना अर्हदादिषु त्रयोदशपदेषु सर्वोपधाविशुद्धः सर्वश्रेयोमूलं विनयो विधेयः, विनीयते—अपनीयतेऽष्टप्रकारं क्लिष्टकर्मानेनेति विनयः, स च सामान्यतः पञ्चधा, तद्यथा— * लोगोवयारविणओ, अत्थनिमित्तं च कामहेउं च । भयविणय

---

१ देवानाम्       * लोकोपचारविनयः अर्थनिमित्तं च कामहेतुश्च । भयविनयो मोक्षविनयो विनयः खलु पञ्चधा भणितः ॥ १ ॥ अभ्युत्थानमञ्जलिरासनदानं चातिथिपूजा च । लोकोपचारविनय देवतापूजा च विभवेन ॥२॥ अभ्यासवृत्तिश्छन्दोऽनुवर्तना देशकालज्ञानं च । अभ्युत्थानमञ्जलि-

मुक्खविणओ विणओ खलु पंचहा भणिओ ॥ १ ॥ अब्भुट्ठाणं अंजलि, आसणदाणं च अतिहिपूआ य। लोगोवयारविणयो, देवयपूआ य विहवेणं ॥ २ ॥ अब्भासवित्तिछंदाणुवत्तणा देसकालदाणं च। अब्भुट्ठाणं अंजलि, आसणदाणं च अत्थकए ॥ ३ ॥ एमेव कामविणओ भएवि नायव आणुपुवीए। मुक्खंमिवि पंचविहो, परूवणा तस्सिमा होइ ॥ ४ ॥ दंसणनाणचरित्ते, तवे य तह ओवयारिए चेव। एसो अ मुक्खविणओ, पंचविहो होइ नायवो ॥ ५ ॥ दवाण सवभावा, उवइट्ठा जे जहा जिणिंदेहिं। ते तह सद्दहइ नरो, दंसणविणओ हवइ एसो ॥ ६ ॥ नाणं सिक्खइ नाणं, गुणेइ नाणेण कुणइ किच्चाइं। नाणी नवं न बंधइ, नाणविणओ हवइ तम्हा ॥ ७ ॥ अट्ठविहं कम्मचयं, जम्हा रित्तं करेइ जयमाणो। नवमन्नं च न बंधइ, चरित्तविणओ हवइ तम्हा ॥ ८ ॥ अवणेइ तवेण तमं उवणेई सग्गमुक्खमप्पाणं। तवम्मि विणयानिच्छियमई, तवविणओ हवइ तम्हा ॥ ९ ॥ अह ओवयारिओ पुण, दुविहो विणओ समासओ होइ। पडिरूवजोगजुंजण, तहय अणासायणाविणओ ॥ १० ॥ पडिरूवो खलु विणओ, काइयजोगे

---

रासनदानं चार्थकृते ॥ ३ ॥ एवमेव कामविनयो भयेऽपि ज्ञातव्य आनुपूर्व्या। मोक्षेऽपि पञ्चविधः प्ररूपणा तस्यैषा भवति ॥ ४ ॥ दर्शनज्ञानचारित्रेषु तपसि तथौपचारिकश्चैव। एष च मोक्षविनयः पञ्चविधो भवति ज्ञातव्यः ॥ ५ ॥ द्रव्याणां सर्वभावा उपदिष्टा ये यथा जिनेन्द्रैः। तान् तथा श्रद्दधाति नरो दर्शनविनयो भवत्येषः ॥ ६ ॥ ज्ञानं शिक्षते ज्ञानं गुणयति ज्ञानेन करोति कृत्यानि। ज्ञानी नवं न बध्नाति ज्ञानविनयो भवति तस्मात् ॥ ७ ॥ अष्टविधकर्मचयं यस्मात् रिक्तं करोति यतमानः। नवमन्यच्च न बध्नाति चारित्रविनयो भवति तस्मात् ॥ ८ ॥ अपनयति तपसा तम उपनयति स्वर्गमोक्षावात्मानम्। तपोविनयनिश्चितमतिस्तपोविनयः स भवति तस्मात् ॥ ९ ॥ अथौपचारिकः पुनर्द्विविधो विनयः समासतो भवति। प्रतिरूपयोगयो-

य वायमाणसिओ । अट्ठचउविहदुविहो, परूवणा तस्सिमा होइ ॥ ११ ॥ अब्भुट्ठाणं अंजलि आसणदाणं अभिग्गहकिई अ । सुस्सूसणमणुगच्छण संसाहण कायअट्ठविहो ॥ १२ ॥ हियमियमफरुसवाई, आलोइयभासि वाइओ विणओ । अकुसलमणोनिरोहो, कुसलमणउदीरणं चेव ॥ १३ ॥ पडिरूवो खलु विणओ, पराणुवित्तिमओ मुणेयव्वो । अप्पडिरूवो विणओ, नायव्वो केवलीणं तु ॥ १४ ॥ एसो भे पडिकहिओ विणओ पडिरूवलक्खणो तिविहो । बावन्नविहिविहाणं, बिंति अणासायणाविणयं ॥ १५ ॥ तित्थयरसिद्धकुलगणसंघकिरियधम्मनाणनाणीणं । आयरियथेरुवज्झायगणीणं तेरसपयाणं ॥ १६ ॥ अणसायणा य भत्ती, बहुमाणो तहय वण्णसंजलणा । तित्थयराई तेरस, चउग्गुणा हुंति बावन्ना ॥ १७ ॥–यथोक्तं विनयं कुर्वन्नर्हद्गुर्वादिषु स्वयम् । धनवत्तीर्थकृल्लक्ष्मीं, लभते भुवनाद्भुताम् ॥ १८ ॥ तथाहि–अनामृद्धरतक्षेत्रे, नगरी मृत्तिकावती । कल-



---

जना तथा चानाशातनाविनयः ॥ १० ॥ प्रतिरूपः खलु विनयः कायिकयोगे च वाचिकमानसिकौ च । अष्टचतुर्विधद्विविधाः प्ररूपणा तस्यैषा भवति ॥ ११ ॥ अभ्युत्थानमञ्जलिरासनदानमभिग्रहकृतिश्च । शुश्रूषणाऽनुगमनसंसाधनानि काये अष्टविधः ॥ १२ ॥ हितमितापरुषवादीआलोच्यभाषी वाचिको विनयः । अकुशलमनोनिरोधः कुशलमनउदीरणं चैव ॥ १३ ॥ प्रतिरूपः खलु विनयः परानुवृत्तिमयो मुणितव्यः । अप्रतिरूपो विनयो ज्ञातव्यः केवलिनां तु ॥ १४ ॥ एष भवद्भ्यः कथितो विनयः प्रतिरूपलक्षणस्त्रिविधः । द्वापञ्चाशद्विधिविधानं ब्रुवते अनाशातनाविनयम् ॥ १५ ॥ तीर्थंकरसिद्धकुलगणसङ्घक्रियाधर्मज्ञानज्ञानिनाम् । आचार्यस्थविरोपाध्यायगणिनां त्रयोदशानां पदानाम् ॥ १६ ॥ अनाशातना च भक्तिर्बहुमानस्तथा च वर्णसंज्वलना । तीर्थंकराद्यास्त्रयोदश चतुर्गुणा भवन्ति द्विपञ्चाशत् ॥ १७ ॥

भोल्लोसिभिर्गैर्हैर्नगैरीतिप्रकाशिनी ॥ १९ ॥ तस्यामासीज्जितारातिर्जितारिः पृथिवीपतिः । मानमुक्तं सदा यस्य, मानसं परमोर्दकम् ॥ २० ॥ दत्तदानः सुपात्रेषु, सुदत्तः श्रावकाग्रणीः । सच्चरित्रपवित्रात्मा, तथा तत्राभवद् गृही ॥ २१ ॥ सर्वे सम्यग्दृशामग्रेसरं पौरा विवेकिनम् । यं सर्वत्र पुरोधाय, कुर्वते पुण्यसंततिम् ॥ २२ ॥ अमूतां तनयौ तस्य, वेश्माधारधुरन्धरौ । आद्यो धनोऽनवद्यात्मा, द्वितीयो धरणः पुनः ॥ २३ ॥ धनोऽभूद्धन्यमूर्द्धन्यः, सद्गुणैर्विश्रुतः पुरे । धरणः शरणं सर्वपाप्मनां क्रूरदृग्मनाः ॥ २४ ॥ कर्पूरपूरवत्कीर्तिर्धनस्याजनि सर्वतः । धरणस्यापकीर्तिस्तु, तत्राङ्गार इवाबभौ ॥ २५ ॥ असहिष्णुरभद्रात्मा, धरणः करुणोज्झितः । धर्माधारं धनं हन्तुं, ततश्छिद्राणि वीक्षते ॥ २६ ॥ अपश्यंस्तानि पापात्मा, धरणो धनमभ्यधात् । आवाभ्यां गम्यते बन्धो !, धनमर्जयितुं क्वचित् ॥ २७ ॥ आवयोर्जायते तत्र, भाग्याभाग्यपरीक्षणम् । तेजो विजृम्भते पुंसो, न हि देशान्तरं विना ॥ २८ ॥ अजानंस्तस्य कौटिल्यं, ज्यायानृजुतया ततः । अनुजेन समं देशान्तरं प्रति स जग्मिवान् ॥ २९ ॥ धरणोऽथ धनं स्माह, गच्छंस्तुच्छमनाः पथि । संसारेऽत्र सुखं भ्रातर्धर्मात्स्यादथवाऽघतः? ॥ ३० ॥ धर्मेणैव सुखं वत्स !, जायते नात्र संशयः । सर्पिर्देश्न इवावन्यामित्युवाच धनोऽपि तम् ॥ ३१ ॥ यतः—पुण्यमेकमनेकानां, सौख्यानां कारणं परम् । यथा संसारकार्येषु, लक्ष्मीः सर्वार्थसाधनम् ॥ ३२ ॥ अहो धर्मस्य माहात्म्यं, को वा वर्णयितुं क्षमः ? । स्युर्यदाभासमानेण, प्राणिनो



१ हर्षितचक्रभानामुत्साहदातृभिः, मुखेन वामात्  २ पर्वतरीति०  ३ प्रमाणेन मानेन च रहितम्  ४ अन्येषामानन्ददायि पक्षे श्रेष्ठमन्यत्
५ प्रसिद्ध

विश्वपूजिताः ॥ ३३ ॥ धरणोऽप्यवद्भ्रातर्मिथ्या किं भाषसे ? यतः । अधर्मादेव दृश्यन्ते, शर्माणि प्राणिनां भुवि ॥ ३४ ॥ इत्थं विवदमानाभ्यामुक्तियुक्तिप्रयुक्तिभिः । नेत्रार्पणपणस्ताभ्यां, चक्रे रभसवृत्तितः ॥ ३५ ॥ क्वापि ग्रामे ततस्ताभ्यां, पृष्टा दुष्टाशया नराः । भवेद्धर्मादधर्माद्वा, देहिनां शर्म भो ! जनाः ? ॥ ३६ ॥ तैरूचे नास्तिकप्रायैः, पापादेव सुखं भवेत् । नास्ति यन्मूर्खलोकानां, पुण्यपापफलज्ञता ॥ ३७ ॥ ततः क्रूरमना नेत्रे, धनस्य धरणोऽग्रहीत् । तत्रैव तं तयाऽवस्थं, मुक्त्वाऽगाच्च स्ववेश्मनि ॥ ३८ ॥ तेन पित्रोः पुरः प्रोचे, घनो व्याघ्रेण भक्षितः । सुतोऽन्तःकाननं तात !, ततोऽहं गृहमागमम् ॥ ३९ ॥ तद्वार्त्ताश्रवणात् शोको, विदधे जनकादिभिः । धनाभावो हि शोकाय, कस्य न स्यात् सचेतसः ? ॥ ४० ॥ इतश्चाद्भुतपुण्यात्मा, वनदेवतया धनः । दिव्याञ्जनप्रयोगेण, निर्ममे निर्मलेक्षणः ॥ ४१ ॥ तदञ्जनमुपादाय, दत्तं देवतया तया । सुभद्रपुरमायासीत्, सुदत्तश्रेष्ठिसूस्ततः ॥ ४२ ॥ अरविन्दनरेन्द्रस्य, पुत्री तत्र प्रभावती । कलाकलापनिष्णाता, सौभाग्यरसवाहिनी ॥ ४३ ॥ यौवनेऽप्यभवत्प्राच्यपापकर्मानुभावतः । मृगनेत्राऽपि द्वन्नेत्रा, कपालोत्कटरोगतः ॥ ४४ ॥ यः करोति नरेन्द्रस्य, सुतां सज्जेक्षणामिमाम् । अर्द्धराज्यश्रियं तस्मै, दत्ते राजाऽनया समम् ॥ ४५ ॥ आकर्ण्योद्घोषणामेवं, धनो धन्यजनाग्रणीः । दिव्याञ्जनाञ्जनेनाशु, तामुज्ज्वलदृशं व्यधात् ॥ ४६ ॥ प्रीतः पृथ्वीपतिस्तस्मै, समेतां सुतया तया । अर्द्धराज्यश्रियं प्रादात्, सन्तः सत्यगिरो यतः ॥ ४७ ॥ धनस्य राज्यलाभादिस्वरूपममृतस्रवम् । निशम्य

१ धनाभिधान पुत्र पक्षे द्रव्यं २ मृ

स्वजनाः सर्वे, जहर्धरणं विना ॥ ४८ ॥ जनकादेशतस्तत्र, धरणो धनसन्निधौ । दुष्टाशयतया यातो, मिलनव्याजतोऽन्यदा ॥ ४९ ॥ धनेन मूर्धनेनापि, सुकृतोन्नतचेतसा । सौदर्यस्नेहतोऽतोषि, धरणः स्वश्रियोऽर्पणात् ॥ ५० ॥ धनस्याद्भुतमैश्वर्यं, परं प्रेक्ष्य स मत्सरी । राजानमन्यदाऽवादीदरविन्दं रहस्पदः ॥ ५१ ॥ श्वपाकः स्वसुतादानाद्धनो गौरवितस्त्वया । कुरुते नगरीलोकं, लोकनाथ ! मलीमसम् ॥ ५२ ॥ तद्गिरा कुपितस्वान्तो, राजा मारयितुं धनम् । अचिन्तयत्परं दैवात्स एवामारि तज्जनैः ॥ ५३ ॥ यतः—षड्भिर्मासैस्तथा पक्षैः, षड्भिरेव दिनैः किल । अत्युग्रपुण्यपापानां, फलमत्रैव जायते ॥ ५४ ॥ सप्तमं नरकं प्रापद्, धरणः पापकर्मणा । निष्कलङ्को धनश्चासीत्, सत्कृती नभसो गिरा ॥ ५५ ॥ तत्स्वरूपं परिज्ञाय, संवेगामृतसागरः । आकार्य पितरौ तत्र, पवित्रौ पुण्यसंपदा ॥ ५६ ॥ सुतं मलयकेतुं स्वं, निवेश्य पितुरन्तिके । भुवनप्रभसूरीणां, पार्श्वे दीक्षामशिश्रियन् ॥ ५७ ॥ युग्मम् । अधीत्यैकादशाङ्गानि, सहोपाङ्गैरजायत । भावसाधुः प्रसन्नात्मा, निस्तरङ्गपयोधिवत् ॥ ५८ ॥ भावसाधुलक्षणं यथा—निर्वाणसाधकान् योगान्, यस्मात्साधयतेऽनिशम् । समश्च सर्वभूतेषु, तस्मात्साधुरुदाहृतः ॥ ५९ ॥ क्षान्त्यादिगुणसंपन्नो, मैत्र्यादिगुणभूषितः । अप्रमादी सदाचारे, भावसाधुस्त्वसौ स्मृतः ॥ ६० ॥ सूत्रार्थपौरुषीयुक्त्या, व्रजन् ग्रामपुरादिषु । धनर्षिरन्यदाऽश्रौषीन्मुखाम्भोजाद् गुरोरिति ॥ ६१ ॥ विनयेन गुरोस्तोषः, सम्यग्ज्ञानं ततो भवेत् । सद्दर्शनमतः सम्यक्चारित्रं परमं ततः ॥ ६१ ॥ तस्माच्च संवरस्तस्मात्तपस्तस्माच्च निर्जरा । ततः कर्मक्षयस्तस्मात्केवलज्ञानमु-

१ रता २ भ्रातृ०

ज्ज्वलम् ॥ ६२ ॥ मुक्तिश्रीसंगमस्तस्मात्तस्मात्सुखमनन्तकम् । सर्वेषां श्रेयसामेवं, विनयो मूलकारणम् ॥ ६३ ॥ प्रतिरूपाशातनाभिः, पद्षष्टिधा भवेदसौ । तत्राद्यश्चतुर्दशधा, कायवाक्चित्तभेदतः ॥ ६४ ॥ अभ्युत्थानं तदालोकेऽभियानं च तदागमे । शिरस्यञ्जलिसंश्लेषः, स्वयमासनढौकनम् ॥ ६५ ॥ आसनाभिग्रहो भक्त्या, वन्दना पर्युपासनम् । तद्यानेऽनुगमश्चेति, विनयः कायिकोऽष्टधा ॥ ६६ ॥ चतुर्धा वाचिकः पथ्यमृद्वल्पालोच्यभाषणैः । द्विधाऽऽन्तरस्तु सदसन्मनोवृत्तिनिवृत्तितः ॥ ६७ ॥ सङ्घः कुलं गणो धर्मः, पश्चापि परमेष्ठिनः । ज्ञानं क्रिया च स्थाविरा, ज्ञानी चेति पृथक् पृथग् ॥ ६८ ॥ आशातनापरित्यागो, भक्तिः सन्मानसंस्तुती । चतुर्भिर्गुणितेष्वेषु, त्रयोदशपदेष्विति ॥ ६९ ॥ द्वापञ्चाशद्विधोऽन्यस्तन्, पद्षष्टिर्द्वयमीलने । तं कुर्वन्निरतीचारं, मुनिरार्हन्त्यमश्नुते ॥ ७० ॥ श्रुत्वेति स्वगुरोर्वाचं, सर्वाङ्गीणां शुभायतिः । तदा धनमुनिर्धन्यान्, स जग्राहेत्यभिग्रहान् ॥ ७१ ॥ मनोवाक्तनुभिः कार्यो, विनयः परमेष्ठिषु । विशेषाद् गुरुपादेषु, सर्वश्रेयोविधायिषु ॥ ७२ ॥ ततः प्रशंसयामास, सम्यग्विनयतत्परम् । तपोधनं धनं सूरिः, सुधासोदरया गिरा ॥ ७३ ॥ बाह्यैस्तपोभिः क्लिश्यन्ते, युगकोटिं जडाशयः । मुक्तेरौपयिकं वैनयिकं त्वेकं न जानते ॥ ७४ ॥ गुणानां विनयो राजा, गीयते जिनशासने । यं विना निष्फलाः सर्वे, गुणाः शमदमादयः ॥ ७५ ॥ पक्षोभयविशुद्धात्मा, विनयं कुरुते यतः । चक्रवर्त्ती नमत्युच्चैर्न पुनः प्राकृतो यतिः ॥ ७६ ॥ विधिना विनयं कुर्वन्नर्हदादिषु[1] संयमी । भुञ्जानोऽप्युपवासस्य, प्रत्यहं लभते फलम् ॥ ७७ ॥ इति, त्रिधा शुद्धं तन्वंस्तन्वन्, विनयं विकसन्मनाः । परमेष्ठ्यादिषु सद्बोधिबीजावायिपदेष्वसौ ॥ ७८ ॥ गुरुणा सह साकेतपुरोद्यानविभूषणम् । आयासीद्वन्दितुं

१ अर्हदादिषु

देवान्, चैत्ये श्रीऋषभप्रभो ॥ ७९ ॥ मुद्रानिर्मितपाणिपद्मघटनां शीर्षाञ्जलीनां विधिं, सूत्रार्थोभयसंपदामभिमनो नित्योपयोगात्मताम् । नेत्रन्यासनिजाङ्घ्रिपङ्कजगतिप्रासादभागस्थितिं, यः सम्यक्कुरुते स एव सुकृती चैत्ये विनीतः स्मृतः ॥ ८० ॥ इत्यादि चैत्यविनयं, विधिवत्कुर्वतो मुनेः । नागेन्द्रो धरणस्तत्र, जिनं वन्दितुमागमत् ॥ ८१ ॥ मनोनिश्चलतां तस्य, ज्ञातुं विनयकर्मसु । नानोपसर्गनिर्माणात्तदा विक्षोभमातनोत् ॥ ८२ ॥ नागेन्द्रनिर्मितैर्नागैर्वेष्टितोऽसौ समन्ततः । दृष्टो दुष्टैश्च नो चैत्यविनयाद्व्यचलन्मनाग् ॥ ८३ ॥ विनये मेरुवद्वीक्ष्य, निश्चलाङ्गं मुनिं ततः । प्रत्यक्षीभूय भोगीन्द्रः, प्रणम्य गुरुमब्रवीत् ॥ ८४ ॥ विनयं कुर्वताऽनेन, विशुद्धं श्रीजिनादिषु । किमासादि फलं[१] स्माह, गुरुस्तीर्थंकृतः पदम् ॥ ८५ ॥ मुनिमतच्छिकां नत्वा, ततस्तं त्रिः परीत्य च । स्वधाम जग्मिवान् वेगात्तद्गुणै रञ्जिताशयः । ८६ आराध्य निरतीचारं, संयमं धनसंयमी । क्रमेण त्रिदशो जज्ञे, सहस्रारे स्फुरद्द्युतिः ॥ ८७ ॥ ततश्च्युतो विदेहेषु, विनयाराधनात्पुनः । धननामा मुनिर्भावी, जिनेन्द्रो जगदीश्वरः ॥ ८८ ॥ एवं धनर्षिचरितं दुरितापहारि, श्रुत्वा सृजन्तु विनयं गुणवत्सु सम्यग् । येन त्रिलोकजनवाञ्छितपुण्यपुण्या, तीर्थङ्करस्य पदवी न दवीयसी स्यात् ॥ ८९ ॥

## ॥ इति श्रीदशमस्थानके धनमुनीश्वरकथानकं समाप्तम् ॥



अथैकादशस्थानकाधिकारः—तत्रोभयसन्ध्यं सामायिकादीनि षडावश्यकानि सूत्रार्थसंपत्सावधानतया विधिवद्विधेयानि,

१ मुनिर्मम०

भाविव्यपदेशान्तरतया स्वल्पकालं, तच्च प्रथमचरमतीर्थकरतीर्थे भरतैरवतक्षेत्रेषु प्रथमशैक्षस्य यावन्महाव्रतारोपो न विधीयते तावद् ज्ञेयं, पश्चाच्छेदोपस्थापनीयचारित्रं, आत्मनः कथां यावदास्ते यत्तद्यावत्कथिकं, यावज्जीवमित्यर्थः, तच्च भरतैरवतक्षेत्रेषु श्रीअजितादिद्वाविंशतितीर्थकरसाधूनां विदेहसाधूनां चावसेयं, तस्य लाभः श्रीजिनागमे एवं निवेदितो यथा—सामायिकोपघातिज्ञानावरणीयदर्शनावरणीयमिथ्यात्वमोहनीयकर्मणां सर्वघातिषु स्पर्धकेषु उद्घातितेषु सत्सु देशघातिषु स्पर्धकेषु अनुद्घातितेषु अनन्तगुणवृद्ध्या प्रतिसमयं विशुद्ध्यमानः शुभशुभतरपरिणामवान् प्राणी भावतः सामायिकस्य पूर्वाक्षरं ककारं लभते, एवमनन्तगुणवृद्ध्यैव प्रतिसमयं विशुद्ध्यमानः सन् स्कारादिवर्णावलीमाप्नोति, एवं भावतः सामायिकस्य लाभो भव्यस्य भवति. यतः— + कह सामाइयलंभो ?, तस्सवविघाइदेसघाईं । देसोवघाई फड्डग अणंतवुड्ढी विसुद्धस्स ॥ ५ ॥ एवं ककारलंभो, सेसाणवि एवमेव कमलंभो ॥ इत्यादि, तस्य चत्वारि एकार्थिकानि, सामं १ समं २ सम्यग् ३ इकं ४ चेति, इकशब्दो देशीयभाषया क्वापि प्रवेशार्थे गीयते, तत्र द्रव्यभावाभ्यामेतानि द्विविधानि, द्रव्यसामं मधुरपरिणामं शर्करादिद्रव्यं, द्रव्यसमं तुलारूढं द्रव्यं, द्रव्यसम्यग् क्षीरखण्डादियुक्तिः, द्रव्यमिकं सूत्रे मुक्ताकलापस्य चयनं चितिः प्रोतनमित्यर्थः, यतः— * महुरपरिणाम सामं १ समं तुला २ खीरखंडजुइ ३ संमं । दोरे हारस्स चिई ४ इगमेयाइं तुं दव्वंमि ॥ ६ ॥ भावसामादिस्वरूपं त्वेवं यथा

+ कथं सामायिकलाभः ? तत्सर्वोपघातिनो देशोपघातिनः । देशोपघातिषु स्पर्धकेषु अनन्तवृद्ध्या विशुद्धस्य ॥ ५ ॥ एवं ककारलाभः शेषाणामपि एवमेव तस्य लाभः । * मधुरपरिणामं सामं समं तुला क्षीरखण्डयुक्तिः सम्यक् । दवरके हारस्य चितिरिकमेतानि तु द्रव्ये ॥ ६ ॥

यतः— + सामाइयं १ चउवीसत्थओ २ वंदणयं ३ पडिक्कमणं ४ काउस्सग्गो ५ पच्चक्खाणं ६, तत्र सामायिकं सम्यक्त्वसासामायिकादिभेदैस्त्रिधा. यतः— * सामाइयं च तिविहं सम्मत्त सुअं तहा चरित्तं च । दुविहं चेव चरित्तं अगारमणगारियं चेव ॥ १ ॥ तत्राद्यमौपशमिकादिभेदैः पञ्चधा, श्रुतसामायिकं द्वादशाङ्गीरूपं सम्यक्श्रुतं, चारित्रसामायिकमगारानगाराभ्यां द्विधा, तत्राद्यं देशविरतिरूपं द्वादशव्रताराधनात्मकं, द्वितीयं सर्वसावद्यव्यापारवर्जनरूपं पञ्चमहाव्रतपञ्चसमितित्रिगुप्तिसावधानस्यानगारिणो भवेत्, यतः— × सावज्जजोगविरओ तिगुत्तो छसु संजओ । उवउत्तो जयमाणो, आया सामाइयं होइ ॥ २ ॥ अथवा समानां ज्ञानदर्शनचारित्राणामायो लाभः समायः, यद्वा समो रागद्वेषविप्रमुक्तो य आत्मवत्सर्वभूतानि पश्यति स समस्तस्यायो लाभः, समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचारित्रपर्यायैर्युज्यते, समाय एव सामायिकं मूलगुणानामाधारभूतं. यतः—सामायिकं गुणानामाधारः खमिव सर्वभावानाम् । न हि सामायिकहीनाश्चरणादिगुणान्विता येन ॥ ३ ॥ तस्माज्जगाद भगवान् सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ ४ ॥ यद्यपि सर्वमपि चारित्रं सकलसावद्यव्यापारपरिहाररूपत्वात्सामायिकमुच्यते, तथापि छेदादिप्रकारैर्नानात्वं भजते, तत्राद्यमविशेषतया सामायिकमुच्यते, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्रेत्वरं

---

+ सामायिक चतुर्विंशतिस्तव. वन्दनकं प्रतिक्रमण कायोत्सर्गः प्रत्याख्यानम्

* सामायिकं च त्रिविधं सम्यक्त्वं श्रुतं तथा चारित्रं च । द्विविधं चैव चारित्रमगारिकमनगारिकं चैव ॥ १ ॥

× सावद्ययोगविरतः त्रिगुप्तः षट्सु संयतः । उपयुक्तो यतमान आत्मा सामायिकं भवति ॥ २ ॥

भाविव्यपदेशान्तरतया स्वल्पकालं, तत्र प्रथमचरमतीर्थकरतीर्थे भरतैरवतक्षेत्रेषु प्रथमशैक्षस्य यावन्महाव्रतारोपो न विधीयते तावद् ज्ञेयं, पश्चाच्छेदोपस्थापनीयचारित्रं, आत्मनः कथां यावदास्ते यत्तद्यावत्काथिकं, यावज्जीवमित्यर्थः, तत्र भरतैरवतक्षेत्रेषु श्रीअजितादिद्वाविंशतितीर्थकरसाधूनां विदेहसाधूनां चावसेयं, तस्य लाभः श्रीजिनागमे एवं निवेदितो यथा—सायायिकोपघातिज्ञानावरणीयदर्शनावरणीयमिथ्यात्वमोहनीयकर्मणां सर्वघातिषु स्पर्धकेषु उद्घातितेषु सत्सु देशघातिषु स्पर्धकेषु अनुद्घातितेषु अनन्तगुणवृद्धया प्रतिसमयं विशुद्धयमानः शुभशुभतरपरिणामवान् प्राणी भावतः सामायिकस्य पूर्वाक्षरं ककारं लभते, एवमनन्तगुणवृद्धयैव प्रतिसमयं विशुद्धयमानः सन् रकारादिवर्णावलीमाप्नोति, एवं भावतः सामायिकस्य लाभो भव्यस्य भवति. यतः— + कह सामाइयलंभो ?, तस्सव्वविघाइदेसघाईइं । देसोववाई फड्डग अणंतवुड्ढी विसुद्धस्स ॥ ५ ॥ एवं ककारलंभो, सेसाणवि एवमेव कमलंभो ॥ इत्यादि, तस्य चत्वारि एकार्थिकानि, सामं १ समं २ सम्यग् ३ इकं ४ चेति, इकशब्दो देशीयभाषया क्वापि प्रवेशार्थे गीयते, तत्र द्रव्यभावाभ्यामेतानि द्विविधानि, द्रव्यसामं मधुरपरिणामं शर्करादिद्रव्यं, द्रव्यसमं तुलारूढं द्रव्यं, द्रव्यसम्यग् क्षीरखण्डादियुक्तिः, द्रव्यमिकं सूत्रे मुक्ताकलापस्य चयनं चितिः प्रोतनमित्यर्थः, यतः— * महुरपरिणाम सामं १ समं तुला २ खीरखंडजुइ ३ संमं । दोरे हारस्स चिई ४ इगमेयाइं तुं दव्वंमि ॥ ६ ॥ भावसामादिस्वरूपं त्वेवं यथा



---

+ कथं सामायिकलाभः ? तत्सर्वोपघातिनो देशोपघातिनः । देशोपघातिषु स्पर्धकेषु अनन्तवृद्ध्या विशुद्धस्य ॥ ५ ॥ एवं ककारलाभः शेषाणामपि एवमेव तस्य लाभ ।    * मधुरपरिणामं सामं समं तुला क्षीरखण्डयुक्ति सम्यक् । दवरके हारस्य चितिरिकमेतानि तु द्रव्ये ॥ ६ ॥

[1] आओवमाइ परदुक्खमकरणं रागदोसमज्झत्थं। नाणाइतियं तह आयपोअणं भावसामाई ॥ ७ ॥ जस्स सामाणिओ अप्पा, संजमे नियमे तवे। तस्स सामाइयं होइ, इइ केवलिभासियं ॥ ८ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु अ । तस्स सामाइयं होइ, इइ केवलिभासियं ॥ ९ ॥ श्रावकोऽपि कृते चास्मिन्, यत्स्यात् श्रमणवत्ततः । पुनः पुनरिदं कुर्यात्, क्षणिकस्तु यदा तदा ॥ १० ॥ मनोदुष्प्रणिधानाद्यास्त्याज्याः पञ्चातिचारकाः । कुरूपश्वासकासादितीव्रदुःखौघदायिनः ॥ ११ ॥ त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः । मुहूर्त्तं समता या तां, विदुः सामायिकव्रतम् ॥ १२ ॥ इदमपि श्रावकस्य महते लाभाय भवति, यतः—
+ दिवसे दिवसे लक्खं देइ सुवण्णस्स खंडियं कोई । इयरो पुण सामइयं करेइ न पहुप्पए तस्स ॥ १३ ॥ सामाइयं कुणंतो समभावओ सावओ घडियदुगं । आउं सुरेसु बंधइ इत्तियमित्ताइं पलियाइं ॥ १४ ॥ बाणवइ कोडीओ लक्खा गुणसट्ठि सहस्स

स्थान०

---

[1] आत्मोपमया परदु खाकरणं रागद्वेषमाध्यस्थ्यम् । ज्ञानादित्रिकं तथाऽऽत्मप्रोतनं भावसामादयः ॥ ७ ॥ यस्य समान आत्मा संयमे नियमे तपसि । तस्य सामायिकं भवति इति केवलिभाषितम् ॥८॥ य समः सर्वभूतेषु त्रसेषु स्थावरेषु च। तस्य सामायिकं भवति इति केवलिभाषितम् ॥९॥

१ निर्ग्रंथाः

+ दिवसे दिवसे लक्षा' सुवर्णस्य खण्डिका ददाति कश्चित् । इतर पुन. सामायिकं करोति न प्रभवति तस्मै ॥ १३ ॥ 'सामायिकं कुर्वन् समभावतः श्रावको घटिकाद्विकम्। आयु' सुरेषु बध्नाति एतावन्मात्राणि पल्यानि ॥१४॥ द्विनवतिः कोट्य' लक्षा एकोनषष्टिः सहस्राणि पञ्चविंशतिः। नव शतानि पञ्चविंशति सत्रिभागा अष्टभागा पल्यस्य ॥ १५ ॥

पणवीसा । नवसयपणवीसजुआ सतिहा अडभाग पलियस्स ॥ १५ ॥ तथा चतुर्विंशतिस्तवः–श्रीमदर्हतां सान्वयनामकीर्त्तनरूपो नामस्तवाभिधानः, असावपि पदसंपदुपयोगतः सार्थकतया द्विसन्ध्यं पठ्यमानो महते सुकृतोदयाय भवति, यतः– × चउवीसत्थएणं भंते जीवे किं जणइ ?, चउवीसत्थएणं दंसणविसोहिं जणेइ, तथा–सत्सूत्रार्थोपयोगेन, चतुर्विंशतिसंस्तवम् । यः पठेत्प्रयतात्माऽसौ, लभते तीर्थकृत्पदम् ॥ १६ ॥ अथ फिट्टाछोभद्वादशावर्त्तभेदैस्त्रिधा वन्दनं, यतः— * गुरुवंदणमिह तिविहं, तं फिट्टा छोभ बारसावत्तं । सिरनमणाइसु पढमं, पुण्णखमासमणदुगं बीयं ॥ १७ ॥ [1] तइयं तु छंदणदुगं, तत्थ मिहो आइमं सयलसंघे । बीयं तु दंसणीणं, पयट्ठियाणं च तइयं तु ॥ १८ ॥ अत्र तु द्वादशावर्त्तवन्दनं विवेकिना श्रीगुर्वादीनां विधेयं, एतत्पञ्चनामादिद्वाविंशत्या द्वात्रिंशद्दोषरहितनवत्यधिकचतुःशतप्रकारशुद्धं विधीयमानं क्लिष्टकर्मनिर्जरायै भवति, यतः— + वंदणएणं भंते जीवे किं जणेइ ?, वंदणएणं जीवे नीआगोअं कम्मं खवेइ उच्चागोअं निबंधइ, सोहग्गं च अप्पडिहयं आणाफलं निव्वत्तेइ दाहिणभावं च णं जणेइ । वंदणयं साहूणं, जो सम्मं देइ गुणसयरयाणं । सो पावइ सयलसुहं, हरिव्व कम्मक्खयं कुणइ ॥ १९॥ दुओणयं अहाजायं, किइकम्मं बारसावयं ।

---

× चतुर्विंशतिस्तवेन भदन्त ! जीवः किं जनयति ? चतुर्विंशतिस्तवेन दर्शनविशोधिं जनयति ।

* गुरुवन्दनमिह त्रिविधं तत् स्फिट्टास्तोभद्वादशावर्त्तात् । शिरोनमनादिषु प्रथमं पूर्णक्षमाश्रमणद्विकं द्वितीयम् ॥ १७ ॥

[1] तृतीयं तु वन्दनकद्विकं तत्र मिथ आद्यं सकलसङ्घे । द्वितीयं तु दर्शनिनां पदस्थितानां च तृतीयं तु ॥ १८ ॥

+ वन्दनकेन भदन्त ! जीवः किं जनयति ?, वन्दनेन जीवो नीचैर्गोत्रं कर्म क्षपयति उच्चैर्गोत्रं कर्म निबध्नाति, सौभाग्यं चाप्रतिहतमाज्ञाफलं निर्वर्त्तयति दाक्षिण्यभावं च जनयति । वन्दनकं साधुभ्यो यः सम्यग् ददाति गुणशतरत्नेभ्यः । स प्राप्नोति सकलसुखं हरिवत् कर्मक्षयं करोति ॥ १९॥

व्रतातिचारविशुद्धयर्थं जघन्येनान्तर्मुहूर्त्तप्रमाणः द्वितीयः कष्टाष्टकर्माष्टकजयार्थं कायोत्सर्गः श्रीबाहुबल्यादिवत्, यतः– × सो उस्सग्गो दुविहो चिट्ठाए अभिभवे य नायव्वो। भिक्खायरिया ३ पढमो उवसग्गभिजुंजणे बीओ ॥ २५ ॥ अट्ठविहंपि य कम्मं, अरिभूअं तेण तज्जयट्ठाए। अब्भुट्ठिया य तवसंजमंमि कुव्वंति निग्गंथा ॥ २६ ॥ * तस्स कसाया चत्तारि, नायगा कम्मसत्तुसेन्नस्स। काउस्सग्गमभग्गं, करंति तो तज्जयट्ठाए ॥ २७ ॥ संवच्छरमुक्कोसं, मुहुत्तमद्धं तु अभिभवुस्सग्गो। चिट्ठाउस्सग्गस्स उ कालपमाणं उवरि वुच्छं ॥ २८ ॥ अथ प्रत्याख्यानं—श्रुतप्रत्याख्याननोश्रुतप्रत्याख्यानभेदाभ्यां द्विविधं, तत्र श्रुतप्रत्याख्यानं पूर्वश्रुतप्रत्याख्याननोपूर्वश्रुतप्रत्याख्यानभेदाभ्यां द्विप्रकारं, तत्राद्यं नवमं पूर्वं प्रत्याख्यानप्रवादाख्यं, नोपूर्वश्रुतप्रत्याख्यानमेतदेव यत् साम्प्रतं श्रीवीरतीर्थे वर्त्तते, नोश्रुतप्रत्याख्यानमपि मूलोत्तरगुणप्रत्याख्यानाभ्यां द्विविधं, तत्राद्यं सर्वदेशभेदाभ्यां द्विप्रकारं, एकैकमपि इत्वरं यावत्कथिकं च, तत्र पंचमहाव्रतरूपमूलगुणपालनरूपं इत्वरं प्रत्याख्यानं धम्मिलस्येव ज्ञेयं, यावत्कथिकं च सर्वसाधूनां, श्रावकस्यापि पञ्चाणुव्रतपरिपालनमयं, देशमूलगुणप्रत्याख्यानं च इत्वरं यावत्कथिकं च भवति, तत्र साधूनां त्रिविधत्रिविधेन प्र-

---

× स व्युत्सर्गः द्विविधश्चेष्टायामभिभवे च ज्ञातव्यः। भिक्षाचर्यायां प्रथम उपसर्गाभियोजने द्वितीयः ॥ २५ ॥

अष्टविधमपि कर्म अरिभूतं तेन तज्जयार्थम्। अभ्युत्थिताश्च तपःसंयमयोः कुर्वन्ति निर्ग्रन्थाः ॥ २६ ॥

* तस्य कषायाश्चत्वारो नायकाः कर्मशत्रुसैन्यस्य। कायोत्सर्गमभग्नं कुर्वन्ति ततस्तज्जयार्थम् ॥ २७ ॥ संवत्सरमुत्कृष्टः मुहूर्त्तान्तरस्त्वभिभवोत्सर्गः। चेष्टोत्सर्गस्य तु कालप्रमाणमुपरि वक्ष्ये ॥ २८ ॥

ख्याख्यानं, अगारिणां तु द्विविधत्रिविधादिभेदेन, यत.—तं दुविहं सुअनासुअ, सुअं दुहा पुवमेव नोपुव्वं। पुव्वसुअ नवमपुव्वं, नोपुव्वसुअं इमं चेव ॥ २९ ॥ नोसुअपच्चक्खाणं मूलगुणे चेव उत्तरगुणे य। मूले सव्वे देसे इत्तरियं जावकहियं च ॥ ३० ॥ मूलगुणावि य दुविहा, समणाणं चेव सावयाणं च। ते पुण विभज्जमाणा, पंचविहा हुंति नायव्वा ॥ ३१ ॥ इति। पाणिवह-मुसावाए, अदत्तमेहुणपरिग्गहे चेव। समणाणं मूलगुणा, तिविहं तिविहेण नायव्वा ॥ ३२ ॥ इति, उत्तरगुणप्रत्याख्यानमनेक-विधमुपवासादिकभेदेन, यत.— * पच्चक्खाणं उत्तरगुणेसु खमणाइयं अणेगविहं। तेण य इह पगइयं तंपिय इणमो दसविहं तु ॥ ३३ ॥ अणागयमइक्कंत कोडीसहियं नियंटियं चेव। सागारमणागारं परिमाणकडं निरवसेसं ॥ ३४ ॥ संकेयं चेव अद्धाए, पच्चक्खाणं तु दसविहं। सयमेवणुपालणियं दाणुवएसे जहसमाही ॥ ३५ ॥ नवकारपोरसीए पुरिमड्ढेगासणेगठाणे य। आयंबिलअभत्तट्ठे, चरिमे य अभिग्गहे विगई ॥ ३६ ॥ दो चेव नमुक्कारे, आगारा छच्च पोरसीए उ। सत्तेव य पुरिमड्ढे,

एगासणगंमि अट्ठेव ॥ ३७ ॥ रत्तेगठाणगस्स उ अट्ठेव य अंबिलस्स आगारा । पंचेव अभत्तट्ठे छप्पाणे चरिम चत्तारि ॥ ३८ ॥ पंच चउरो अभिग्गहे निव्विइए अट्ठ नव य आगारा । अप्पाउरणे पंच उ हवंति सेसेसु चत्तारि ॥ ३९ ॥ पच्चक्खाणंमि कए, आसवदाराइं हुंति पिहिआइं । आसववुच्छेएणं, तण्हावुच्छेयणं होइ ॥ ४० ॥ तण्हावुच्छेएण य अउलोवसमो भवे मणुस्साणं । अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥ ४१ ॥ इति ॥ विधोपयोगतस्तन्वन्नावश्यकक्रियां सुधीः । लभते तीर्थकृल्लक्ष्मीं, श्रीमानरुणदेववत् ॥ ४२ ॥ तथाहि—अत्रैव भरतक्षेत्रे, नगरं मणिमन्दिरम् । तमो निरस्यते नित्यं, यत्रार्हन्मणिमन्दिरैः ॥ ४३ ॥ तत्रासीन्त्रासिताराातिर्भूपतिर्मणिशेखरः । यथार्थनामवान् जज्ञे, यस्त्यागैस्त्यागिषु क्षितौ ॥ ४४ ॥ तस्याभून्मणिमालेव, मणिमाला प्रियाऽमला । भूषयन्ती सदा भर्त्तुः, सद्गुणा हृदयस्थलम् ॥ ४५ ॥ तयोः पुत्रोऽभवत्पात्रं, निस्त्रासगुणसंपदः । श्रीमानरुणदेवाख्यः, क्षितिविख्यातविक्रमः ॥ ४६ ॥ सुमतिः सुमतिस्तस्य, मित्रं मन्त्रिसुतोऽजनि । सहायः सर्वकार्येषु, सुखदुःखसमाशयः ॥४७॥ मित्रेण सममन्येद्युर्यौवनोन्मादमन्थरः । वसन्ते क्रीडया क्रीडोद्याने भूपसुतोऽगमत् ॥४८॥ रुचिमान् रचयंस्तस्मिन्,

॥३७॥ रक्तैकस्थानकस्य तु अष्टावेवाचामाम्लस्याकारा । पञ्चैवाभक्तार्थे षट् पाने चरमे चत्वार ॥३८॥ पञ्च चत्वारो (वा) अभिग्रहे निर्विकृतावष्ट नव चाकारा । अप्रावरणे पञ्च तु भवन्ति शेषेषु चत्वार. ॥ ३९ ॥ प्रत्याख्याने कृते आश्रवद्वाराणि भवन्ति पिहितानि । आश्रवव्युच्छेदेन तृष्णाव्युच्छेदनं भवति ॥ ४० ॥ तृष्णाव्युच्छेदेन चातुल उपशमो भवेन्मनुष्याणाम् । अतुलोपशमेन पुन प्रत्याख्यानं भवति शुद्धम् ॥ ४१ ॥

१ दाने· २ महात्मसु

त्याख्यानं, अगारिणां तु द्विविधत्रिविधादिभेदेन, यतः—तं दुविहं सुअनोसुअ, सुअं दुहा पुव्वमेव नोपुव्वं । पुव्वसुअं नवमपुव्वं, नोपुव्वसुअं इमं चेव ॥ २९ ॥ नोसुअपच्चक्खाणं मूलगुणे चेव उत्तरगुणे य । मूले सव्वे देसे इत्तरियं जावकहियं च ॥ ३० ॥ मूलगुणावि य दुविहा, समणाणं चेव सावयाणं च । ते पुण विभज्जमाणा, पंचविहा हुंति नायव्वा ॥ ३१ ॥ इति । पाणिवह-मुसावाए, अदत्तमेहुणपरिग्गहे चेव । समणाणं मूलगुणा, तिविहं तिविहेण नायव्वा ॥ ३२ ॥ इति, उत्तरगुणप्रत्याख्यानमनेक-विधमुपवासादिकभेदेन, यतः— * पच्चक्खाणं उत्तरगुणेसु खमणाइयं अणेगविहं । तेण य इह पगइयं तंपिय इणमो दसविहं तु ॥ ३३ ॥ अणागयमइक्कंतं कोडीसहियं नियंटियं चेव । सागारमणागारं परिमाणकडं निरवसेसं ॥ ३४ ॥ संकेयं चेव अद्धाए, पच्चक्खाणं तु दसविहं । सयमेवणुपालणियं दाणुवएसे जहसमाही ॥ ३५ ॥ नवकारपोरसीए पुरिमड्ढेगासणेगठाणे य । आयंबिलअभत्तट्ठे, चरिमे य अभिग्गहे विगई ॥ ३६ ॥ दो चेव नमुक्कारे, आगारा छच्च पोरसीए उ । सत्तेव य पुरिमड्ढे,

---

* तद्द्विविधं श्रुतनोश्रुतात् श्रुतं द्विधा पूर्वं नोपूर्वं । पूर्वश्रुतं नवमं पूर्वं नोपूर्वश्रुतमिदमेव ॥२९॥ नोश्रुतप्रत्याख्यानं मूलगुणे चैव उत्तरगुणे च । मूले सर्वं देशे इत्वरं यावत्कथिकं च ॥३०॥ मूलगुणा अपि च द्विविधाः श्रमणानां देशे श्रावकाणां च । ते पुनर्विभज्यमानाः पञ्चविधा भवन्ति ज्ञातव्याः ॥ ३१ ॥ प्राणिवधमृषावादे अदत्तमैथुनपरिग्रहेषु चैव । श्रमणानां मूलगुणाः त्रिविधत्रिविधेन ज्ञातव्याः ॥ ३२ ॥ प्रत्याख्यानमुत्तरगुणेषु क्षपणादिक-मनेकविधम् । तेन चेह प्रकृतं तदपीदं दशविधमुक्तम् ॥ ३३ ॥ अनागतमतिक्रान्तं कोटीसहितं नियन्त्रितमेव । साकारमनाकारं परिमाणकृतं निरव-शेषम् ॥३४॥ संकेतमद्धायामेव प्रत्याख्यानं तु दशविधम् । स्वयमेवानुपालनीयं, दानोपदेशयोर्यथासमाधि ॥३५॥ नमस्कारसहितं पौरुषी पुरिमार्धमे-कासनमेकस्थानं च । आचाम्लमभक्तार्थं चरमं चाभिग्रहो विकृतिः ॥३६॥ द्वावेव नमस्कारे आकारौ षडेव पौरुष्यां तु । सप्तैव च पूर्वार्धे एकाशनेऽष्टैव

एगासणगंमि अट्ठेव ॥ ३७ ॥ सत्तेगठाणगस्स उ अट्ठेव य अंबिलस्स आगारा । पंचेव अभत्तट्ठे छप्पाणे चरिम चत्तारि ॥ ३८ ॥ पंच चउरो अभिग्गहे निविइए अट्ठ नव य आगारा । अप्पाउरणे पंच उ हवंति सेसेसु चत्तारि ॥ ३९ ॥ पच्चक्खाणंमि कए, आसवदाराइं हुंति पिहिआइं । आसववुच्छेएणं, तण्हावुच्छेयणं होइ ॥ ४० ॥ तण्हावुच्छेएण य अउलोवसमो भवे मणुस्साणं । अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥ ४१ ॥ इति ॥ त्रिधोपयोगतस्तन्वन्नावश्यकक्रियां सुधीः । लभते तीर्थकृल्लक्ष्मीं, श्रीमानरुणदेववत् ॥ ४२ ॥ तथाहि–अत्रैव भरतक्षेत्रे, नगरं मणिमन्दिरम् । तमो निरस्यते नित्यं, यत्रार्हन्मणिमन्दिरैः ॥ ४३ ॥ तत्रासीन्नासितारातिर्भूपतिर्मणिशेखरः । यथार्थनामवान् जज्ञे, यस्त्यागैस्त्यागिषु क्षितौ ॥ ४४ ॥ तस्याभून्मणिमालेव, मणिमाला प्रियाऽमला । भूषयन्ती सदा भर्त्तुः, सद्गुणा हृदयस्थलम् ॥ ४५ ॥ तयोः पुत्रोऽभवत्पात्रं, निस्सारागुणसंपदः । श्रीमानरुणदेवाख्यः, क्षितिविख्यातविक्रमः ॥ ४६ ॥ सुमतिः सुमतिस्तस्य, मित्रं मन्त्रिसुतोऽजनि । सहायः सर्वकार्येषु, सुखदुःखसमाशयः ॥४७॥ मित्रेण सममन्येद्युर्यौवनोन्मादमन्थरः । वसन्ते क्रीडया क्रीडोद्याने भूपसुतोऽगमत् ॥४८॥ रुचिमान् रचयंस्तस्मिन्,

---

॥३७॥ एकैकस्थानकस्य तु अष्टावेवाचामाम्लस्याकाराः । पञ्चैवाभक्तार्थे षड् पाने चरमे चत्वारः ॥३८॥ पञ्च चत्वारो (वा) अभिग्रहे निर्विकृतावष्ट नव चाकाराः । अप्रावरणे पञ्च तु भवन्ति शेषेषु चत्वारः ॥ ३९ ॥ प्रत्याख्याने कृते आश्रवद्वाराणि भवन्ति पिहितानि । आश्रवव्युच्छेदेन तृष्णाव्युच्छेदनं भवति ॥ ४० ॥ तृष्णाव्युच्छेदेन चातुल उपशमो भवेन्मनुष्याणाम् । अतुलोपशमेन पुनः प्रत्याख्यानं भवति शुद्धम् ॥ ४१ ॥

१ दानैः २ महात्मसु

स पुष्पावचय इने । कन्यां धन्यां व्यलोकिष्ट, कांश्चिद्दोलावलम्बिनीम् ॥ ४९ ॥ त्रैलोक्याद्भुतलावण्यां, पश्यन्तं तां सुलोचनाम् । निबिडं ताडयामास, तं कामः कङ्कपत्रिभिः ॥ ५० ॥ यतः—चित्रस्था अपि चेतांसि, हरन्ति हरिणीदृशः । किं पुनः स्मरविभ्रमविस्फारितविलोचनाः ॥ ५१ ॥ तस्मिन्नवसरे तत्रागतः कश्चिन्नभश्चरः । उपादाय समित्रं तं, तत्याज गहने वने ॥५२॥ स युद्धेन विनिर्जित्य, कुमारेण खगाधमः । चक्रन्द पातितो भूमौ, व्यथया तीव्रयाऽधिकम् ॥ ५३ ॥ तद्भ्राताऽशनिवेगेन, क्रुधोत्क्षिप्य महौजसा । कुमारोऽक्षेपि गम्भीरे, कूपे पापीव दुर्गतौ ॥ ५४ ॥ पुण्यानुभावतस्तत्र, पपाताल्पजलावनौ । स्वस्थीभूय पुनः कूपात्, कथञ्चिन्निर्ययौ बहिः ॥ ५५ ॥ कर्मानुकूल्यतस्तत्र, कथञ्चिन्मिलितेन सः । मित्रेणानुगतो गच्छन्, देशान्तरदिदृक्षया ॥ ५६ ॥ लक्ष्मीदेवीगृहासत्तौ, क्वचिदीक्षितवान्नरम् । दिव्याकारं तरौ बद्धमूर्ध्वपादमधोमुखम् ॥ ५७ ॥ तत्समीपे च सुदतीं, रुदतीं करुणस्वरम् । भूषणैर्निर्भितोद्योतां, दिव्याङ्गीं देवतामिव ॥ ५८ ॥ युग्मं । कुमारः करुणाम्भोधिरभ्यधात्तां मृगेक्षणाम् । दुरवस्थामिमां कोऽयं, प्राप्तोऽस्ति सुकृती पुमान् ? ॥ ५९ ॥ साऽवक् विद्याधरस्वामी, भद्रायं मम वल्लभः । कुसुमावचयं कुर्वन्, लक्ष्मीरमणकानने ॥ ६० ॥ लक्ष्मीदेवतया बद्धः, क्रुद्धयाऽत्र महाशय ! । मोचनीयस्त्वया विश्वोपकारस्फारचेतसा ॥ ६१ ॥ तस्या वाचं तदाकर्ण्य, कुमारस्तस्य मुक्तये । समभ्यर्च्य श्रियं भक्त्या, प्रस्तौति स्मोचितीपतिः ॥ ६२ ॥ जय त्वं कमले देवि !, सेवकाभीष्टदायिनि ! । सुरासुरनरश्रेणिसेव्यमानपदाम्बुजे ! ॥ ६३ ॥ तव प्रसादतो मातर्दोषा अपि गुणात्मताम् । श्रयन्ति प्राणिनां तस्मात्प्रसीद परमेश्वरि ! ॥ ६४ ॥ इति स्तुतिवचःप्रीता, पद्मा प्रत्यक्षतां गता । तमुवाच वरं वत्स !, वृणीष्व हृदयंगमम्

१ प्राणं

॥ ६५ ॥ साञ्जलिस्तां ततोऽवादीत्, प्रीतिमान् पृथिवीशसूः । अमुं विद्यावरं देवि !, मुञ्च विश्वाङ्गिवत्सले ! ॥ ६६ ॥ तद्गिरा खेचरोऽमोचि, पद्मयाऽथ प्रसन्नया । परोपकारनिष्ठस्य, देवाः सेवाभृतो यतः ॥ ६७ ॥ पुनर्जातमिवात्मानं, मन्वानः खेचरेश्वरः । व्याजहार नराधीशनन्दनं नन्दिताशयः ॥ ६८ ॥ पुंरत्न ! रत्नगर्भेयं, भवता भूरजायत । स्वार्थादप्यधिको यस्य, परार्थो हृदयेऽभवत् ॥ ६९ ॥ यतः—क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः, स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः । दुष्पूरोदरपूरणाय पिबति श्रोतःपतिं वाडवो, जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये ॥ ७० ॥ ततः प्रत्युपकारार्थं, कृतज्ञः खेचरेश्वरः । प्रज्ञप्तिप्रमुखास्तस्मै, विद्या अर्पितवान् दश ॥ ७१ ॥ प्राप्तविद्यः श्रियं देवीं, प्रणम्य परमादरात् । कुमारोऽथ समं व्योमगामिना सुहृदाऽन्वितः ॥ ७२ ॥ पुरो व्रजन् तरुश्रेणिफलपुष्पसमाहितम् । अपश्यत् शान्तिनाथस्य, चैत्यं काञ्चननिर्मितम् ॥७३॥ युग्मं ॥ पयोभिर्निर्मलीभूय, चन्द्रकान्तविनिर्गतैः । प्रविश्य विधिना तस्मिन्, भृतो भावेन भूयसा ॥ ७४ ॥ अभ्यर्च्य प्रतिमां पुष्पैः, श्रीशान्तेः सौरभाद्भुतैः । पञ्चाङ्गेन प्रणामेन, प्रणम्य स्तुतवानिति ॥ ७५ ॥ श्रीशान्ते ! जगतां नेतर्निजात्मप्रतिबिम्बतः । चिदानन्दमय स्वामिन् !, ममात्मानमलङ्कुरु ॥ ७६ ॥ विश्वसेननराधीशवंशाकाशविवस्वति । पद्मोल्लासपदे दृष्टे, त्वय्यासीन्मे दिनोदयः ॥ ७७ ॥ यस्ते धत्ते शिरस्याज्ञां,तस्याज्ञां नाथ ! मूर्द्धसु । संपन्नवसुधाभोगा द्योपाभूपाश्च कुर्वते ॥ ७८ ॥ त्वद्भक्तिकलिता मुक्तामया दृढगुणान्विताः । वक्षःस्थले विराजन्ते, हारा इव शिवश्रियः ॥७९॥ त्वत्स्वरूपमयं यस्य, सम्यक् स्वान्तं भवेद्विभो ! । तस्य विश्वत्रयैश्वर्यपदवी न दवीयसी ॥ ८० ॥ यन्मनस्त्वन्मयीभावं, दुग्धाम्बुवद्विभो ! व्रजेत् । स एव सुकृती नूनं, भवेदासन्नसिद्धिकः ॥८१॥ दूरीकृततमा विश्वविदुरः सद्गुणालयः । श्रीशान्तिर्ददतां शान्तिं, तीर्थेशोऽन्येऽपि शाश्वतीम् ॥८२॥ इति स्तुत्वा

जिनाधीशं, श्रीशान्ति कान्तिभासुरम् । सोऽपश्यद्भारतीं देवीं, मण्डितां तत्र मण्डपे ॥ ८३ ॥ सर्वविद्वद्वनाम्भोजचतुष्पथप्रतिष्ठिताम् । भक्तितोऽसौ नमस्कृत्य, तां स्तौति स्म सितद्युतिम् ॥ ८४ ॥ सत्काव्यनादपक्षाभ्यां, भुवनत्रयचारिणी । देवी सरस्वती हंसी, रमतां मम मानसे ॥ ८५ ॥ यस्त्वद्वक्त्रमृगाङ्कमण्डलमिलत्कान्तिप्रतानोच्छलच्छ्वच्चन्द्रकचक्रचित्रितककुप्कन्याकुलं ध्यायति । वाणी वाणि । विविधभङ्गुरपदप्रागल्भ्यशृङ्गारिणी, नृत्यत्युन्मदनर्त्तकीव सरसं तद्वक्त्ररङ्गाङ्गणे ॥ ८६ ॥ इति स्तुतिसुधास्वादप्रसन्ना सा सरस्वती । वरं तस्मै ददौ वत्स !, कन्यां शान्तिमतीं भवान् ॥ ८७ ॥ परिणीय पराह्लादपदं मैत्रीमिवाद्भुताम् । भूयाद्विद्याधरस्वामी, योगीवैश्वर्यसंगत. ॥ ८८ ॥ युग्मं ॥ श्रीशान्तिवेश्मतस्तेन, ततो निर्गच्छता पुर. । दृष्टा शान्तिमती कन्या, लावण्यामृतसारिणी ॥ ८९ ॥ ततोऽसौ चिन्तयामास, दोलालीलावलम्बिनी । उद्याने या मयाऽदर्शि, दर्शनानन्दकौमुदी ॥९०॥ सैवेयं सुखसर्वाङ्गं, जीवितं जगतीतले । उपकारी महानेष, व्योमगो मे ततोऽभवत् ॥ ९१ ॥ प्राच्यपुण्योदयादस्मिन्नानीतो विपिनेऽमुना । येन लक्ष्मी महादेव्याः, सर्वर्तुफलशालिनी ॥ ९२ ॥ युग्मं । कन्यापि तं तदालोक्य, कुमारं कामसन्निभम् । बभार परमां प्रीतिं, रोमाञ्चोद्भिन्नकञ्चुका ॥ ९३ ॥ उत्फुल्लचम्पकश्रेणेर्ग्रथित्वा सा सुमस्रजम् । भूर्जपत्रं च गाङ्गेयं, स्वहस्तलिखिताक्षरम् ॥९४॥ स्वधात्रीपाणिना प्रैषीत्, तस्मै हार्दानुरागतः । मालामादाय तत्पत्रं, सोऽपि वाचितवान् यथा ॥ ९५ ॥ वैताढ्ये दक्षिणश्रेण्यां, नगरे शिवमन्दिरे । वज्रवेगोऽस्ति भूभर्त्ता, वज्रवेगा च तत्प्रिया ॥ ९६ ॥ तयोः शान्तिमती नाम्ना, नन्दनाऽहं वरार्थिनी । नैमित्तिकगिरा सौवपितुरादेशतस्तथा ॥ ९७ ॥ पूजयन्ती प्रतिदिनं, श्रीशान्तिं भारतीं तथा । धाव्या समं सुखेनात्र, वसामि विजने वने ॥ ९८ ॥ पुण्यपुण्योदयादद्य, भारत्या सुप्रसन्नया । अर्पितोऽस्ति वरो मह्यं, भवाननभवान् गुणैः ॥ ९९ ॥ समग्रोद्वा-

हसामग्रीसहित. प्रातरेष्यति । भवदागमनं श्रुत्वा, पिता मे मुदितोऽधिकम् ॥ १०० ॥ ततः प्रसादमाधाय, कृपाधाम नृपात्मज ! । एकरात्रं त्वया स्थेयं, वनेऽत्र हृदयंगमे ॥ १ ॥ अवगत्येति पत्रार्थं, कुमारो हृदयंगमम् । पुष्पमालां हृदि न्यस्य, प्रीत्या प्रणयिनीमिव ॥ २ ॥ उन्निद्रस्नेहतो मुद्रां, निजनामाङ्कितामसौ । कन्यायै प्रेषयामास, धात्र्या हस्ताम्बुजन्मना ॥ ३ ॥ वज्रवेगः प्रगे तत्रागत्य नीत्वा च तं पुरे । सुतामुद्वाहयामास, ततस्तां रचितोत्सवम् ॥ ४ ॥ स विद्याभृद्ददौ तस्मै, पाणिमोचनपर्वणि । राज्यलक्ष्म्या समं दिव्यमणिमाणिक्यमण्डलीम् ॥ ५ ॥ तस्मिन्नवसरे नाट्योन्मत्तेन व्योमचारिणा । दुरात्मना हृतस्तस्य, सुमतिः परमः सुहृत् ॥ ६ ॥ प्रज्ञप्तिविद्ययाऽऽनीय, कुमारस्मृनयाऽर्पितः । न चिरस्थायिनी येन, विपत्सद्वृत्तशालिनाम् ॥ ७ ॥ ॥ युग्मं ॥ विधाय विधिवद्विद्यासाधनं क्रमतः सुधीः । जित्वा च खेचरं नाट्योन्मत्तं संग्रामकर्मणा ॥ ८ ॥ सम्राट् विद्याधरश्रेणेः, सोऽभूद् भूरिपराक्रमः । धर्मो जयति सर्वस्मिन्निति सत्यापयन् पदम् ॥ ९ ॥ युग्मं ॥ सोऽन्यदा शुश्रुवे धर्मदेशनां दयितासखः । चारणश्रमणस्वामिजयन्तस्वामिना कृताम् ॥ १० ॥ यथा—तीर्थे यात्रा विधेया निजकरकमलैः पूजनीया जिनेन्द्रा, धार्यं सम्यक्त्वरत्नं मनसि निरुपमं जन्तवश्चानुकम्प्याः । देयं पात्रेषु दानं सुकृतितनुभृतो माननीया विमायं, तीर्थेशश्रीस्त्रिलोकीतलतिलकसमा प्राप्यते येन पुण्यैः ॥ ११ ॥ ततोऽसौ तं नमस्कृत्य, सम्यक्त्वव्रतभूषितम् । शान्तिदेव्या समं सम्यग्, श्राद्धधर्ममशिश्रियत् ॥ १२ ॥ शाश्वताशाश्वतान्यर्हच्चैत्यानि निखिलान्यपि । प्रणम्य भक्तितः सम्यग्दृष्टिनैर्मल्यहेतवे ॥ १३ ॥ जगृहेऽ-



---

१ प्रभाते २ कलत्रेण सहित ३ निष्पाप ४ पवित्रा

क्मादेवेन, फलं सा राज्यसंपदः । विवेकी यत् श्रियं प्राप्य, सत्कार्ये न प्रमाद्यति ॥ १४ ॥ युग्मं ॥ दत्त्वाऽथ वज्रवेगाय, श्रेणि-
द्वयनृपश्रियम् । शान्तिदेव्या सह श्रीमानरुणः खेचरेश्वरः ॥ १५ ॥ दिव्यं विमानमारूढः, प्रौढैर्विद्याधरैर्वृतः । नानाऽऽतोद्यनि-
नादेन, गर्जयन् व्योममण्डलम् ॥ १६ ॥ प्रापत् कृतोत्सवे पौरैः, पुरे श्रीमणिमन्दिरे । निजतातपदाम्भोजं, विनीतात्मा ननाम च
॥ १७ ॥ त्रिभिर्विशेषकं ॥ मणिशेखरभूपालः, स्वाङ्गजश्रीविलोकनात् । विदधे मुदितस्वान्तः, सदुत्सवपरम्पराम् ॥ १८ ॥ निज-
राज्यपदे न्यस्य, तनयं नयोज्ज्वलम् । मुनिप्रभगुरोः पार्श्वे, राजा जग्राह संयमम् ॥ १९ ॥ श्रीमानरुणदेवोऽपि, प्रजा इव
निजप्रजाः । पालयन् दर्शयामास, पन्थानं न्यायधर्मयोः ॥ २० ॥ श्रीपद्मप्रभगौराङ्गं, पद्मशेखरमङ्गजम् । अजीजनत्क्रमाच्छान्ति-
देवी राज्यधुरन्धरम् ॥ २१ ॥ मधुमासेऽन्यदा गच्छन्, लीलोद्यानं स लीलया । मणिशेखरराजर्षिं, प्रशान्ताशेषकल्मषम् ॥ २२ ॥
दृष्ट्वा दृष्टश्रुताकारमनगारं पुरो बहिः । सस्मार प्राक्तनीं जातिं, जगतीजानिरात्मनः ॥ २३ ॥ तथाहि—शुक्तिमत्यां पुरा पुर्यां,
महारम्भान्वितोऽजनि । क्रूरकर्मा गृही श्रीमान्, वैद्यो विद्याविदग्रणीः ॥ २४ ॥ धनैकदृष्टिना नानाकूटयोगोपदेशतः । तेनायुर्वे-
दिना कस्को, लोको नो वञ्चितः क्षितौ ? ॥२५॥ तस्यान्यदा गृहे कश्चिद्भेषजार्थी तपोनिधिः । गुरुणा प्रेषितः प्रापन्मुनिर्धर्म-
इद्रसान् ॥ २६ ॥ विशुद्धमौषधं तस्मै, स वैद्यः प्रददौ स्वयम् । मुनिनाऽपि तदाऽऽदेशि, तस्यैव हितहेतवे ॥ २७ ॥ प्राय-
श्चैकित्सिकं शास्त्रं, महारम्भैककारणम् । पापश्रुततयाऽऽख्यातं, निमित्तं दुर्गतेः परम् ॥ २८ ॥ ज्योतिःशास्त्रं चिकित्सा च, धातु-

१ स्मात० २ पराशीत ३ भूपाल

र्वादोऽथ वैद्यकम् । पात्रं विना न देयानि, पापव्याप्रतिदर्शनात् ॥२९॥ तथापि भवता भद्र !, मुनीनां विरतात्मनाम् । कल्प्यौषधानि देयानि, यथायोगं स्वभक्तितः ॥ ३० ॥ संप्राप्तिर्बोधिबीजस्य, येनागामिनि जन्मनि । भवतोऽपि भवेन्नूनं, मुक्तिशर्मनिबन्धनम् ॥ ३१ ॥ यतः—गृहिणां गृहिधर्मस्य, सारमेतत्परं स्मृतम् । यथाशक्ति सुपात्रेषु, दानं यच्छुद्धवस्तुनः ॥ ३२ ॥ ततः प्रभृति साधूनां, दयार्द्रहृदया मनाक् । क्वचित्क्वचिद्ददौ कल्प्यौषधानि विविधान्यपि ॥ ३३ ॥ आर्त्तध्यानात्परं मृत्वा, स जज्ञे वानराग्रणीः । वानरीणां पतिः पञ्चशतीनां काननावनौ ॥ ३४ ॥ सोऽन्यदा जातिमस्मार्षीत्सशल्यमुनिदर्शनात् । यद् दृष्टा अपि जन्तूनां, साधवः स्युः शिवावहाः ॥ ३५ ॥ प्राग्भवाभ्यासतः साधुमौषधीभ्यामसौ व्यधात् । गतशल्यं भवाम्भोधेः, पारमाप च तत्क्षणात् ॥ ३६ ॥ न्यवेदि साधुना तस्मै, धर्मो निश्छद्मचेतसा । पीयूषादपरं किञ्चित्किमिन्दुर्भुवि वर्षति ? ॥ ३७ ॥ वानरोऽपि ततः प्राप्य, बोधिलाभं मनोहरम् । त्रिदिनीं पालयामास, सम्यग् सामायिकं व्रतम् ॥ ३८ ॥ ततोऽनशनमाराध्य, मुनेर्वाचा प्रशान्तहृत् । त्रिपल्यायुरसौ स्वर्गे, सौधर्मे त्रिदशोऽजनि ॥ ३९ ॥ ज्ञानेनावधिना ज्ञात्वा, तं मुनिं गुरुसन्निधौ । गत्वा स्वरूपमाख्याय, नत्वा देवो दिवं ययौ ॥ ४० ॥ ततश्च्युतोऽभवद्देवोऽरुणदेवाभिधो नृपः । संस्मृत्येति निजां जातिं, सोऽप्यनंसीन्मुनिं पुनः ॥ ४१ ॥ विमुच्य प्रतिमां तस्मै, धर्माशीर्वादपूर्वकम् । प्रददौ स मुनिर्धर्मदेशनाममृतस्रवाम् ॥४२॥ न्यग्रोधे दुर्लभं पुष्पं, दुर्लभं स्वातिजं पयः । दुर्लभं मानुषं जन्म, दुर्लभं जिनशासनम् ॥ ४३ ॥ कल्पद्रुस्पर्शपाषाणदक्षिणावर्त्तशङ्खवत् । तत्रापि दुर्लभं राजन् !, तत्त्वश्रद्धानमान्तरम् ॥ ४४ ॥ जिनेन्द्रो देवता तत्र, सर्वज्ञः सर्वदोषहृत् । निश्छद्मब्रह्मपूतात्मा, सर्वसावद्यहृद् गुरुः ॥ ४५ ॥ क्षमादिर्दशधा धर्मः, शिवशर्मपदं पुनः । एतानि त्रीणि तत्त्वानि, प्रणीतानि जिनागमे ॥ ४६ ॥ रत्नत्रयमिदं

सम्यग्, यः श्रद्धत्ते शुभाशयः । तस्य भव्यत्वपाकेन, भवेच्चारित्रयोग्यता ॥ ४७ ॥ तद्देशसर्वविरतिस्वरूपाभ्यां द्विधा स्मृतम् । तत्राद्यं गृहिणां प्रोक्तं, द्वितीयं तु जितात्मनाम् ॥४८॥ देशचारित्रमाराध्य, प्राणी देवत्वमश्नुते । सिद्धिगामी भवेन्नूनम्, सर्व-संयमपालनात् ॥ ४९ ॥ मुहूर्त्तमात्रं चारित्रं, यदि स्यान्निष्कषायिकम् । वैमानिकपदैश्वर्यं, भवेत्प्रायस्तदाऽङ्गिनः ॥५०॥ इत्याकर्ण्य गिरं साधोः, प्रबुद्धोऽसौ महीपतिः । पद्मशेखरपुत्राय, पवित्राय नयश्रिया ॥ ५१ ॥ वितीर्य निजसाम्राज्यं, निर्मिताष्टाहिकोत्सवम् । स श्रीप्रभमुनीन्द्रस्य, पार्श्वे शिश्राय संयमम् ॥ ५२ ॥ युग्मं ॥ शान्तिदेवी तदा देवी, संवेगरसपूरिता । दीक्षां जग्राह जैनेन्द्रीमनेकांहःक्षयक्षमाम् ॥ ५३ ॥ अधीयन् द्वादशाङ्गानि, स्थानकानां फलं महत् । अन्यदाऽरुणराजर्षिः, शुश्राव गुरु-सन्निधौ ॥ ५४ ॥ एकादशे पदे साधुः, सम्यग्ज्ञानोपयोगवान् । त्रिधा शुद्धेन विधिना, कुर्वन्नावश्यकक्रियाम् ॥ ५५ ॥ तीर्थ-कृत्पदमाराध्य, मोदते मुक्तिसंपदा । आवश्यकोपयुक्तस्य, गुर्वी स्यान्निर्जरा यतः ॥ ५६ ॥ यतः—आवश्यकेषु शान्तात्मा, सोप-योगमना मुनिः । दुर्जराण्यपि कर्माणि, तत्क्षणाज्झरति ध्रुवम् ॥ ५७ ॥ श्रुत्वेत्यरुणराजर्षिः, सोऽभिग्रहमजिग्रहत् । पञ्चधाऽपि परित्यज्य, प्रमादं विषमेष्वपि ॥ ५८ ॥ आवश्यकेषु सर्वेषु, सदा सामायिकादिषु । सम्यक् स्वान्तोपयोगेन, त्रिधा कार्यो मयो-द्यमः ॥ ५९ ॥ युग्मं ॥ सामायिके ततः सम्यक्, संयमामलतावहे । कृतसम्यक्त्वनैर्मल्ये, चतुर्विंशतिसंस्तवे ॥ ६० ॥ कुर्व-न्निश्छद्म सर्वत्र, सावधानतयोद्यमम् । राजर्षिस्तीर्थकृत्कर्म, स्वरात्ताकं विनिर्ममे ॥ ६१ ॥ चतुर्भिः कलापकं । षण्मासावधि राजर्षेस्तस्याकारि परीक्षणम् । लक्ष्मीदेवतया घोरैरुपसर्गशतैरपि ॥ ६२ ॥ शब्दरूपरसस्पर्शविषयैः सुखहेतुभिः । क्वचिद्देवाङ्ग-नावृन्दैरमन्दानन्ददायिभिः ॥ ६३ ॥ योगिनोऽपि स्पृहामानेर्हाविभावपुरस्सरम् । प्रार्थितोऽपि स निर्ग्रन्थः, स्नेहगर्भं पदे पदे

॥ ६४ ॥ अप्रीतिकारिभिः क्वापि, दुर्वाक्यै. क्रकचोपमैः । वृंदन दोषमुद्घोष्य, भर्त्सितोऽप्यप्रियङ्करैः ॥ ६५ ॥ न रागद्वेष-कालुष्यनिर्मितं निर्ममाग्रणी. । अतीचारं परं कालातिक्रमं च मनागपि ॥ ६६ ॥ आनिन्ये समताशाली, प्रशोऽसौ वस्तुवेदिषु । विशेषेण त्रिधा शुद्धो, वरत्वावश्यककर्मसु ॥ ६७ ॥ पञ्चभिः कुलकं । श्रीदेवी मुदितस्वान्ता, प्रादुर्भूय ततो मुनिम् । वन्दित्वा क्षमयामास, तन्वती सद्गुणस्तुतिम् ॥ ६८ ॥ धन्योऽसि त्वं महाभाग । वन्द्योऽसि स्वर्गिणामपि । शब्दादिकगुणग्रामैरमिरामैर्मगा कृतेः ॥ ६९ ॥ रागद्वेषोदयः क्वापि, भवतो भवतोयधेः । पूर्णिमेन्दूदयप्रायो, यस्य नासीन्मनागपि ॥ ७० ॥ त्रिभिर्विशेषकं ॥ प्रायेण बहवः सन्ति, द्रव्यावश्यककारिणः । सन्तीह कतिचिद्भावावश्यकेषु रताः पुनः ॥७१॥ स्तुत्वैवं बहुमानेन, नमस्कृत्य पुनः पुनः । श्रीर्जगाम निजं धाम, तद्गुणग्रामरञ्जिता ॥ ७२ ॥ चारित्रधर्ममाराध्य, क्रमाद्राजर्षिरुत्तमम् । देवोऽभूद् द्वादशे स्वर्गे, स्वर्गेश इव संपदा ॥ ७३ ॥ ततश्च्युतो विदेहेऽसौ, पदवीमर्हतोऽद्भुताम् । आसाद्यावद्यमुक्तात्मा, परमात्मा भविष्यति ॥ ७४ ॥ एवं निशम्यारुणदेवमुक्तो, वृत्तं जिनाधीशपदाभिभासुरम् । आवश्यकेष्वाहतिरात्मशक्त्या, सदा विधेया विधिचोपयोगात् ॥ ७५ ॥

## ॥ इत्येकादशस्थानकेऽरुणदेवकथानकं संपूर्णं ॥

अथ द्वादशस्थानके विवेकिना निर्मलं शीलं पालनीयं, यत—नृषु चक्री सुरेष्विन्द्रः, पूज्येषु श्रीजिनेश्वरः । यथा मुख्य-स्तथा ब्रह्मव्रतं सर्वव्रतेष्वपि ॥ १ ॥ चिन्तामणिः करे तस्य, तस्य कल्पद्रुमो गृहे । कामधुग् सविधे तस्य, यस्य शीलं समुज्ज्वलम् ॥ २ ॥ तच्चाष्टादशभेदं, यथा—दिव्यौदारिककामानां, कृतानुमतिकारितैः । मनोवाक्कायतस्त्यागो, ब्रह्माष्टादशधा मतम्

॥ ३ ॥ अथवा त्रिविध शील, यथा–सदाचारशील अष्टादशसहस्राङ्गलक्षण नवब्रह्मगुप्तिसनाथब्रह्मव्रतपालन च, यत:–+सुद्ध समायारमनिन्दणिज्जं, सहस्सअट्ठारसलक्खण च । बंभाभिहाण च महावयंति, सीलं तिहा केवलिणो वयंति ॥ ४ ॥ तच्च यतिभिः सर्वाङ्गनापरिहाररूप दशब्रह्मचर्यसमाधिसहित मनोवाक्काये कृतकारितानुमोदनावर्जनेन यावज्जीवं पालनीयं, गृहमेधिभिरित्वरापरिगृहीतविधवापणाङ्गनादिपरिहारेण स्वदारसंतोषरूप यावज्जीवं पञ्चपर्व्यादौ स्वदारगमनाभिगमनं च पालनीयं, तथा शीलं द्विविधधर्मसाररूप सकललोकपूजनीय च, यत:–प्राणभूत चरित्रस्य, परब्रह्मैककारणम् । समाचरन् ब्रह्मचर्यं, पूजितैरपि पूज्यते ॥ ५ ॥ हरति कुलकलङ्कं लुम्पते पापपङ्कं, सुकृतमुपचिनोति श्लाघ्यतामातनोति । नमयति सुरवर्गं हन्ति दुर्गोपसर्गं, रचयति शुचि शीलं स्वर्गमोक्षौ सलीलम् ॥ ६ ॥ *जो देइ कणयकोर्टि, अहवा कारेइ कणयजिणभवणं । तस्स न तत्तिय पुन्नं, जत्तिय बंभवए धरिए ॥ ७ ॥ [1] काएण बंभचेरं, धरंति सढाउ जे अ सुद्धमणा । कप्पंमि बंभलोए ताणं नियमेण उववाओ ॥ ८ ॥ द्वादशे निरतीचारं, तद्धार्यं विशदं बुधैः । जिनेन्द्रपदवी येन, प्राप्यते चन्द्रवर्मवत् ॥ ९ ॥ इहैव भरतक्षेत्रे, पवित्रजनसद्मनि । माकन्दीपुरि पुण्यात्मा, चन्द्रवर्मा नृपोऽभवत् ॥ १० ॥ बद्धमुष्टिरपि स्वर्गश्रियं सर्वेषु वैरिषु । रणे यच्छन् कृपाणोऽस्य, गतोकारो

+ शुद्ध समाचारोऽनिन्दनीय सहस्राष्टादशलक्षण च । ब्रह्माभिधान च महाव्रतमिति शील त्रिधा केवलिनो वदन्ति ॥ ४ ॥

* यो ददाति कनककोटी अथवा कारयति कनकजिनभवनम् । तस्य न तावत्पुण्यं, यावद् ब्रह्मव्रते धृते ॥ ७ ॥

[1] कायेन ब्रह्मचर्यं धारयन्ति स्त्रियोऽपि ये च शुद्धमनस । कल्पे ब्रह्मलोके तेषा नियमेनोपपात ॥ ८ ॥

१ र⁻ग   २ तृणण

बभूव न ॥ ११ ॥ विनयेन समं विद्या, साकं दानेन संपदः । निवासं विदधुर्यस्मिन्, भूभुजि ज्यायसि श्रिया ॥ १२ ॥ तस्य चन्द्रावली देवी, त्रिलोकीतिलकोपमा । आसीन्निरसीमसौभाग्या, श्रीरामस्येव जानकी ॥ १३ ॥ तया दयितया भूमान्, श्रियेव पुरुषोत्तमः । प्रीतिमान् विरतो नित्यं, नारीष्वन्यास्वजायत ॥ १४ ॥ तत्रान्यदा चतुर्ज्ञानजगच्चक्षुः समागतः । श्रीमांश्चक्रेश्वरः सूरिस्तन्वन्नानातपं स्थितिम् ॥ १५ ॥ तुङ्गं सिंहासनं हैमं, मेरुशृङ्गमिवोज्ज्वलम् । तस्यासनकृते देवैर्मुदितैस्तत्र निर्ममे ॥१६॥ तमानन्तुं महीनेता, वनपालगिराऽगमत् । भक्तिमान् श्रेष्ठिसामन्तप्रमुखैर्नागरैर्वृतः ॥१७॥ तत्रागच्छन् भुवः स्वामी, नयनानन्ददायिनौ । कायोत्सर्गासनौ साधू, सिन्धू इव शमश्रियः ॥१८॥ निरीक्ष्य कनकाम्भोजदीधिती गुरुसन्निधौ । नत्वा सविस्मयस्वान्तः, सूरिराजं व्यजिज्ञपत् ॥ १९ ॥ युग्मं ॥ अमुना मुनियुग्मेन, तिग्मांशूपमतेजसा । यौवने हेतुना केन, गृहीतं दुष्करं व्रतम् ? ॥ २० ॥ गुरुः स्माह महाराज !, शृणु वैराग्यकारणम् । अनयोर्दधतोः साधुगुणानां सप्तविंशतिम् ॥ २१ ॥ कुशस्थलपुरे श्रेष्ठी, मदनः सदनं श्रियः । अजायत गुणश्रेणिसज्जसज्जनमण्डनः ॥२२॥ आद्या चण्डा प्रचण्डा च, द्वितीया दयिते उभे । तस्याभूतां महापापमत्सरग्रस्तचेतसौ ॥२३॥ ययोरासीन्मनःप्रीत्यै,सततं कलहे लय.। न पुनः क्वापि सस्नेहं, स्वभर्तुः कलहेलयः ॥२४॥ चत्वारस्तनयास्तस्य, वेश्मालङ्कृतिकौस्तुभाः । ताभ्यां जाताः क्रमादासन्, मनोविश्राममूमयः ॥ २५ ॥ क्रमेण निर्ययौ लक्ष्मीस्तद्गृहाच्चिरसंचिता । कल-



१ स्त्रिया २ भास्वान् ३ विविधतपोमर्यादम् ४ समुद्रौ ५ सुवर्णकमलतेजसौ ७ सूर्य० ८ आमन्त्रिति क्रिया उपचारोऽर्थो वा.

नयोस्तयोर्नित्यकलहोद्वेजिता किमु ॥ २६ ॥ प्रचण्डासुखमूढात्मा, प्राप्तोऽसौ बहुभिर्दिनैः । चण्डालयेऽन्यदा श्रेष्ठी, पन्नवं स्वदतेऽधिकम् ॥ २७ ॥ चण्डा चण्डाशयोत्पाट्य, मुशलं विकटाकृतिः । मुमोच सहसा हन्तुं, तं भर्त्तारमपि क्रुधा ॥ २८ ॥ तद्भयेन पुनः श्रेष्ठी, नष्टः पश्चाद् द्रुतं क्रमैः । तत्पृष्ठे पन्नगीभूयायासीन्मुशलमप्यहो ॥ २९ ॥ समीपं स प्रचण्डाया, आगात्व्याकुलमानसः । ऊर्ध्वश्वासीव पुरुद्वर्त्तं, साऽपीति स्माह तं तदा ॥ ३० ॥ आर्यपुत्र ! भृशं श्वासपूरितानननासिकः ॥ स्वेदवान् श्लथसन्नद्धस्त्वं, वेगादेवागतः कथम् ? ॥ ३१ ॥ सोऽभ्यधान्मुशलं मुक्तं, हन्तुं मां कोपचण्डया । चण्डया पन्नगीभूय, पृष्ठावायाति सत्वरम् ॥ ३२ ॥ ततोऽहं वेश्मनस्तस्याः, पापाया द्रुतमागमम् । जवाद्भयाकुलः पाहि, पाहि मां प्राणवल्लभे ! ॥ ३३ ॥ एवं वदत एवास्य, स भोगी भीषणाकृतिः । फुत्कारैर्भापयन् घोरैः, सर्वं यावदुपाययौ ॥ ३४ ॥ अङ्गोद्वर्त्तनसंजातमलसंभारवर्त्तिकाः । निर्मुक्ताः संमुखं तस्य, पन्नगस्य समन्ततः ॥ ३५ ॥ दयितं रक्षितुं तावल्लब्धलक्षतया तया । अवद्यैकपदं विद्यां, पठित्वा तत्क्षणादपि ॥ ३६ ॥ युग्मं ॥ सहसा नकुलीभूय, प्रसर्पन्ती जवोद्धतम् । सर्पं तं भक्षयामास, अहो चित्रं तयोर्महत् ॥ ३७ ॥ स्वस्थीभूतस्ततः श्रेष्ठी, निशि तस्या गृहे स्थितः । दध्यौ स्वान्ते प्रिये ! एते, उभे अपि दुराशये ॥ ३८ ॥ मन्त्रतन्त्रौषधश्रेणिपूरिते सुकृतोज्झिते । एते करिष्यतः कोपं, साकं यदि ममोपरि ॥ ३९ ॥ तदा मे धर्ममुक्तस्य, मरणं शरणं विना । अकालेऽपि समायातं, लोकद्वयसुखापहम् ॥४०॥ युग्मम् । तस्मादहमितः स्थानादास्यमादाय वेगतः । क्वचिदन्यत्र गच्छामि, यत्र स्यात्सुकृतागमः ॥ ४१ ॥ इति निध्याय शुद्धात्मा, त्यक्त्वा ते दयिते त्वरात् । ततो देशान्तरं गच्छन्, स सांकाश्यपुरं ययौ ॥ ४२ ॥ भानुनामा

रमाधामे, श्रेष्ठी तत्रास्ति नेगमः । भार्या भानुमती तस्य, चत्वारश्च तयोः सुताः ॥ ४३ ॥ पुत्री विद्युल्लता विद्युल्लतेव शुतिशालिना । नानाविज्ञाननिष्णातौ, तथा प्राणप्रिया पितुः ॥ ४४ ॥ युग्मं ॥ तस्मै तां स ददौ श्रेष्ठी, गोत्रदेव्या निदेशतः । प्रायेण हि सुवृत्तस्य, न चिरं स्थायिनी विपत् ॥ ४५ ॥ नवोढया तया सार्कं, स भुञ्जन् पञ्चधा सुखम् । मदनः सदने तस्यास्तस्थौ वर्षाणि कानिचित् ॥ ४६ ॥ अन्यदा मदनश्रेष्ठी, प्राचीनसदनद्वयं । स्मृत्वा पुत्रकलत्रादिचिन्ताविवशमानसः ॥ ४७ ॥ विद्युल्लतां प्रियां पृष्ट्वा, जगाम स्वपुरं प्रति । तस्मै करम्बकं सापि, पथि पाथेयमर्पयत् ॥४८॥ युग्मम् । एकाकी स ततो मोहात्, सपाथेयः पथि व्रजन् । तापसातिथये प्रादात्तदर्द्धं भोजनक्षणे ॥ ४९ ॥ अन्नदानं सदा देयं, सत्पात्रेषु विशेषतः । स्ववित्ताद्यनुसारेण, धीमता सुकृतार्थिना ॥ ५० ॥ अतिथीनर्थिनो दुःस्थान्, भक्तिशक्त्यनुकम्पनैः । कृत्वा कृतार्थान्नौचित्याद्भोक्तुं युक्तं महात्मनाम् ॥ ५१ ॥ उपाविशत्सरस्तीरे, भोजनार्थं स यावता । प्रतीक्षस्व क्षणं तावन्नभोगीरित्यजायत ॥ ५२ ॥ विवेकी स क्षणं तस्थौ, यावत्ताऽकृत-भोजनः । मेपीभूय समायासीत्तावत्तत्र स तापसः ॥ ५३ ॥ स तं तादृग्विधं दृष्ट्वा, दध्यौ विस्मितमानसः । किमेतदथवा स्त्रीणां, चरित्रं गहनं यतः ॥ ५४ ॥ × रविचरियं गहचरियं, ताराचरियं च राहुचरियं च । जाणंति बुद्धिमंता, महिलाचरियं न जाणंति

१ °श्मीश्यानम् २ वणिक् ३ कुशाग ४ शाश्म

× रविचर्या ग्रहचर्या ताराचर्या च राहुचर्या च । जानन्ति बुद्धिमन्तो महेलाचरितं न जानन्ति ॥ १ ॥ मत्स्यानि जले रति आकाशे पक्षिणां पदपङ्क्ति । महिलाना हृदयमार्गं त्रीण्यपि लोके नैव दृश्यन्ते ॥ २ ॥

॥ ५५ ॥ मच्छपय जलपथे, आगासे पंखियाण पयपती । महिलाण हियपमग्गो, तिन्नि वि लोए न दीसंति ॥ ५६ ॥ इति, व्रजन्नेप ततो मेषः, सांकाश्यं पत्तनं प्रति । विद्युल्लतागृहं प्रापदहो कार्मणमुत्कटम् ॥ ५७ ॥ मदनोऽपि रहोवृत्त्या, समं तेन कुतूहली । आगत्य बहिरेवास्थाद्वेश्मनो विजने क्वचित् ॥ ५८ ॥ विद्युल्लता गृहायातं, तं मेषं वीक्ष्य यष्टिभिः । निर्दयं ताडयामास, स्तम्भे बद्ध्वा दुराशया ॥ ५९ ॥ वारिता सा जनैर्दुष्टा, नैव तिष्ठति वक्ति च । यो भक्षति करम्बं हि, विडम्बं स सहिष्यति ॥ ६० ॥ सोपशान्ता सखीवाचा, ततस्तं मन्त्रवारिणा । यथावस्थितरूपं तं, तापसं निर्ममे क्षणात् ॥ ६१ ॥ भयभ्रान्तमनाः श्रेष्ठी, ततश्चिन्तामिति व्यधात् । ताभ्यामप्यधिका योषिदहो एषा विशेषतः ॥ ६२ ॥ अथासौ तामपि त्यक्त्वा, राक्षसीमिव साहसी । हसन्तीं स्वश्रिया स्वर्गं, हसन्ती नगरीं ययौ ॥ ६३ ॥ तत्र श्रीऋषभस्वामिचैत्ये चन्द्रांशुनिर्मले । आर्हतीं प्रतिमां नत्वा, परमां प्रीतिमाप सः ॥ ६४ ॥ तत्रागतेन पूजार्थं, धनदेवेन धीमता । पृष्टोऽवक् मदनश्रेष्ठी, स्वस्वरूपं यथास्थितम् ॥ ६५ ॥ धनदेवोऽवदद्भद्र !, किमेतत्कौतुकं तव । यद्भवन्ति स्त्रियः प्रायः, कौटिल्यैकनिकेतनम् ॥ ६६ ॥ यतः—

आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां, दोषाणां संनिधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् । अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं, स्त्रीयन्त्रं केन लोके विषममृतमयं शर्मनाशाय सृष्टम् ? ॥ ६७ ॥ आकर्णय सकर्ण !, त्वं, स्वरूपं मम वेश्मनः । तापोपशान्तितः स्वान्तं, यत्ते शीतलतां व्रजेत् ॥ ६८ ॥ इभ्यो धनपतिर्नाम्ना, पुराऽत्रैवाभवत्कृती । धनसारो धनदेवश्च, तस्याभूतां सुतावुभौ ॥ ६९ ॥ क्रमाद्धनपतौ जाते, स्वर्नारीनयनातिथौ । सम्पदोऽपि ततो नेशुस्तत्स्नेहादिव वेश्मतः ॥ ७० ॥ भ्रातरौ तु ततो जातौ, पृथक् पृथग्गृहे स्थितौ । न भवेत्स्वजनस्नेहः, प्रायो यत्संपदं विना ॥ ७१ ॥

धनदेवः पुनः कन्यां, धन्यामन्यामुदूढवान् । सपत्न्या सह तत्प्रीतिमनेत्य स व्यचिन्तयत् ॥ ७२ ॥ प्रायः परस्परं वैरं, सपत्नीनां स्वभावतः । नागानामिव गेहेषु, वीक्ष्यते श्रीमतामपि ॥ ७३ ॥ अनयोरुभयोरस्ति, परा प्रीतिः परस्परम् । केनचिद्धेतुना भाव्यं, ततोऽत्राहं विलोकये ॥७४॥ ध्यात्वेति कैतवात् कृत्वा, स्वदेहापाटवं मनाक् । सकालेऽपि स सुष्वाप, दृढवस्त्रावृताननः ॥७५॥ निद्रायमाणं तं वीक्ष्याचचक्षे दयिताऽऽदिमा । सज्जीभव जवाज्जामे !, यद्यावस्तत्र साम्प्रतम् ॥ ७६ ॥ सापि शृङ्गारमादाय, तदुक्तिप्रेरिता सती । गन्तुं समुत्सुका जज्ञे, सपत्न्या समुदा सह ॥ ७७ ॥ ततः पुराद्बहिर्गत्वा, ते स्वमन्त्रानुभावतः । यावदाम्रं समारुह्य, जग्मतुर्नभसि द्रुतम् ॥ ७८ ॥ तावत्स कौतुकी भर्त्ता, समं ताभ्यां शनैः शनैः । संव्यानेन निजं बद्ध्वा, चूतमूलेऽगमद्रहः ॥ ७९ ॥ आम्रोऽपि दक्षिणाम्भोधिं, वेगादुल्लङ्घ्य तद्गिरा । रत्नद्वीपपरिष्कारे, पुरे रत्नपुरे ययौ ॥ ८० ॥ तदुद्याने विमुच्याम्रं, ततस्ते श्रेष्ठिनः प्रिये । उत्तीर्य प्रापतुर्मध्ये, पुरं सोऽप्यनुजग्मिवान् ॥ ८१ ॥ तस्मिन्नवसरे तत्र, पाणिग्रहमहो महान् । श्रीदत्तस्य कुमारस्य, वसुदेवाङ्गजन्मनः ॥ ८२ ॥ श्रीपुञ्जश्रेष्ठिनः पुत्र्या, श्रीमत्या सह वर्त्तते । स्फूर्जत्तूर्यप्रतिध्वानवाचालितदिगाननः ॥८३॥ युग्मम् । विस्मितस्तद्गृहद्वारे, तदुत्सवदिदृक्षया । धनदेवस्तदा तस्थौ, त्यक्त्वा तद्दयिताद्वयम् ॥८४॥ संप्राप्तः सपरीवारस्तोरणद्वारि यावता । कुकर्मोदययोगेन, तावता मृतिमाप्तवान् ॥ ८५ ॥ सशोकः स्वजनैः सार्कं, वसुदेवोऽथ दुःखवान् । पश्चात्स्वगृहमायासीद्वैचित्र्यं कर्मणामहो ॥ ८६ ॥ ततस्तां देवतादेशाद्धनदेवः स दैवतः । उपयेमे हि सर्वत्र, भाग्यं



१ वेगेन  २ भगिनि !  ३ सप्रमोदया  ४ उत्तरीयेण  ५ मध्यगते  ६ विधेः  ७ परिणिन्ये

जागर्त्यभङ्गुरम् ॥ ८७ ॥ भ्रान्त्वा स्वैरं पुरस्यान्तस्ते उभे अपि लीलया । द्रष्टुं तदुत्सवश्रेणिं, तत्रायाते दुराशये ॥ ८८ ॥ धनदेवं पतिं वीक्ष्य, तदाऽन्योऽन्यमजल्पताम् । आर्यपुत्रः समायापीदयमत्र कथञ्चन ॥ ८९ ॥ अथवाऽत्र कथं प्राप्तिस्तस्य द्वीपेऽब्धिमध्यगे । मृष प्रकारैः सादृश्यं, परमस्मिन्निरीक्ष्यते ॥ ९० ॥ इत्याकूताकुलस्वान्ते, तदुत्सवपरम्पराम् । चिरं नेत्रातिथीकृत्य, जग्मतुस्ते पुराद्बहिः ॥ ९१ ॥ सिचयस्याञ्चले तस्याः, कुङ्कुमेन तदाऽलिखत् । निजस्वरूपबोधार्थं, श्लोकमेकं सुधीर्यथा ॥ ९२ ॥ क्व हसन्ती रत्नपुरं, क्व क्वासौ गगनमण्डनश्चूतः । धनपतिसुतधनदेवो, विधेर्वशात्सुखकृते वृत्तः ॥ ९३ ॥ विनिर्मायेत्यभिज्ञानं, कायचिन्तामिषेण सः । रहोवृत्त्या समं ताभ्यां, प्रियाभ्यां बहिराययौ ॥ ९४ ॥ तथैवाम्रप्रयोगेण, श्रेष्ठी प्राप्य निजं पुरम् । स्वशय्याया निशाशेषे, निद्रया सुखमन्वभूत् ॥ ९५ ॥ प्रभातेऽथ तमालोक्य, सकङ्कणकरं प्रियम् । उद्वृद्धः क्वाप्यसौ रात्रावित्याह स्म ततो मिथः ॥ ९६ ॥ ततो दवरकं लब्ध्वाऽभिमन्त्र्य दक्षिणे करे । निबध्य स शुकीचक्रे, वृद्धादेशेन दुष्टया ॥ ९७ ॥ अथोच्चावचया वाचा, स ताभ्यां तर्ज्यतेऽन्वहम् । वामभ्रुवाऽथवा को न, सुधीरप्यभिभूयते ? ॥९८॥ श्रीपुञ्जः प्रातरालोक्य, श्रीमत्याः सिचयाञ्चले । आर्यां तां वर्णकव्यक्तवर्णां निर्णीतवानिति ॥ ९९ ॥ हसन्तीनगरीवासी, जामाताऽसौ कथञ्चन । अत्रागत्य सुतामेतां, पाणौ कृत्वा गतः पुनः ॥१००॥ तस्यां सागरदत्तेन, व्यवसायार्थं गच्छता । लेखं संप्रेषयामास, तस्मै हारेण संयुतम् ॥१॥ सोऽपि तस्यां क्रमात्प्राप्तः, कुशली तत्कलत्रयोः । लेखं हारसमं दत्त्वा, श्रीपुञ्जोक्तं न्यवेदयत् ॥२॥

---

१ उच्चनीचया    २ वर्णैः निर्णाति [illegible]

अपि । निर्जित्य सेवकीभावं, कारिते किल कौतुकम् ॥ १८ ॥ तासां समानशीलानाममूत्प्रीतिः परस्परम् । भयभ्रान्तमना: श्रेष्ठी, तथैवाजनि दुःखितः ॥ १९ ॥ स चाहमस्मि भो बन्धो !, गृहबन्धविडम्बितः । ताः परं विपदः साक्षात्त्यक्तुं शक्नोमि न प्रियाः ॥ २० ॥ न दुःखं भवता कार्यं, भवतापार्त्तचेतसा । न कस्को वञ्चितो परमान्नारीभिः कुटिलात्मभिः ? ॥२१॥ यतः—वाचि प्रजोद्देशि गतावलकावलीषु, यासां मनःकुटिलतातटिनीतरङ्गाः । अन्तर्न मान्त इव दृष्टिपथं प्रयाताः, करताः करोतु सरलास्तरलायताक्षीः? ॥ २२ ॥ तदुक्तं मदनः श्रुत्वा, दध्यौ वैराग्यभृन्मनाः । धन्यः स एव लोकेऽस्मिन्, योषिद्भिर्यो न मोहितः ॥ २३ ॥ यतः—चलति गलितधैर्यः को न मोक्षान्तरालात्, झगिति गवलनीला यत्पुरो वक्रिताङ्गी ? । इयमुपशमरूपं मार्गमाखण्डयन्ती, चलति कुवलयाक्ष्या भ्रूलता सर्पिणीव ॥२४॥ तस्मिन्नवसरे तत्र, देववन्दनहेतवे । प्राप्ता वयं महाराज !, यतिराजिपुरस्कृताः ॥२५॥ श्रुत्वोपदेशमस्माकं, रङ्गत्संवेगमानसौ । मदनो धनदेवश्च, दीक्षामाददतुस्तदा ॥२६॥ शमशीलदयावन्तौ, तावेतौ मुनिपुङ्गवौ । अधीत्यैकादशाङ्गानि, प्राप्तौ गीतार्थतां गणे ॥२७॥ नृपोऽथावक् मुनिस्वामिन् !, श्रीपूज्यैः केन हेतुना । तपस्या जगृहे मुक्त्वा, यौवनेऽपि गृहाश्रमम् ॥२८॥ गुरुः स्माह महाराज, ! त्रिविधत्रिविधात्मना । रक्षायै सर्वजन्तूनां, शिश्रिये मुनिचारिता ॥ २९ ॥ यतः—धर्मार्थं गृह्यते दीक्षा, धर्मः षट्कायरक्षणात् । षड्जीवरक्षणं नास्ति, गृहवासे कथञ्चन ॥ ३० ॥ खण्डिनी पेषणी चुल्ही, जलकुम्भी प्रमार्जिनी । पञ्च सूना गृहस्थस्य, ततो जीवदया कथम् ? ॥ ३१ ॥ गृहस्थधर्मसेवायां, भवेज्जीववधो महान् । दृष्टः केवलिभिः सूक्ष्मप्राणिनां रक्तजन्मिनाम् ॥ ३२ ॥ स्त्रीणामेकैकसंयोगे, नवलक्षाणि तत्क्षणम् । संसक्तयोनिसंजातप्राणिनां हन्ति कामुकः ॥ ३३ ॥ * असंख्-

* असंख्या स्त्रीनरमैथुन न समूर्छिमपञ्चेन्द्रियपञ्चकाः । निःशेषाङ्गाना विमर्दिता भणति जिन [illegible] ॥ ३४ ॥

इत्थीनरमेहुणाओ, समुच्छिपंचिंदियमाणुसा उ । भंसिसअंगाणं विभत्तिचंगे, भणइ जिणो पण्णवणाउवंगे ॥३४॥ [*] पुरिसेण सहग-याए तेसिं जीवाण होइ उद्दवणं । वेणुगदिट्ठन्तेणं, तत्तायसिलागनाएणं ॥ ३५ ॥ मीताभयप्रदानाय, निरताः सन्ति मूरयः । भुवने मैथुनत्यागात्स्तोका एवाभयप्रदाः ॥ ३६ ॥ एवं तद्देशनां श्रुत्वा, प्रबुद्धः पृथिवीपतिः । चन्द्रसेनसुतं राज्ये, न्यस्य न्यायधुरन्धरम् ॥ ३७ ॥ अर्हद्वेश्मसु निर्माय, प्रौढपूजामहोत्सवान् । शिश्राय संयमं चन्द्रवर्मा श्रीगुरुसन्निधौ ॥ ३८ ॥ युग्मं ॥ पठन्नेकादशाङ्गानि, सूत्रार्थोभययोगतः । अन्यदा देशनामेवमश्रौषीद् गुरुणोदिताम् ॥ ३९ ॥ विंशतिस्थानकानां यो, विधत्तेऽन्य-तरत्सुधीः । तीर्थकृत्पदवीं प्राप्य, मोदतेऽसौ शिवश्रिया ॥ ४० ॥ नृगतावेव जीवेन, सम्यग्दर्शनशालिना । तदर्ज्यते परं पुंसा, स्त्रिया वाऽन्यतमेन वा ॥ ४१ ॥ तत्रापि द्वादशे स्थाने, त्रिधा शुद्धं निरन्तरम् । पालनीयं पुनः शीलमक्षोभ्यं निदशैरपि ॥ ४२ ॥ पामैरपि दीयन्ते, दानानि विविधान्यपि । परं पालयितुं शक्यं, शीलं वीरपुरन्दरैः ॥ ४३ ॥ सर्वेषामपि दानानां, शीलं संजीवनौषधम् । शीलं चूडामणिप्रायं, तपःसीमन्तवर्त्मनि ॥ ४४ ॥ श्रुत्वेति शुभलेश्यात्मा, राजर्षिर्निर्मलं त्रिधा । शील-माराधयामास, तीर्थकृद्भक्तिभावितः ॥ ४५ ॥ निद्राप्रमादमुक्तात्मा, रूक्षाहारपरो मुनिः । दृष्टिं न्यवर्त्तयन्नित्यं, स्त्रीरूपाद्भास्करादिव ॥ ४६ ॥ स्त्रीकथां वर्जयामास, तज्जातिकुलवर्णनम् । स्त्र्यादिसंसक्तवसतौ, निवासं स महामुनिः ॥ ४७ ॥ मनोज्ञेषु मनो नैव, कुर्यात् स्त्रीहसितादिषु । दृष्टिं तद्दृष्टिभिः साकं, न बबन्ध कदाचन ॥ ४८ ॥ तस्य पालयतो जिह्मेतरं ब्रह्म महामुनेः ।

[*] पुरुषेण सह गतायां तेषां जीवानां भवत्युपद्रवणं । वेणुदृष्टान्तेन, तप्तायःशलाकाज्ञातेन ॥ ३५ ॥ १ यथास्थितं.

शब्दरूपरसस्पर्शगन्धेषु विषयेष्वथ ॥ ४९ ॥ न कदाप्यभवत् तृष्णा, न मोहो न स्पृहापि च । सदैव सावधानस्य, नवसु ब्रह्मगुप्तिषु ॥ ५० ॥ युग्मं ॥ अन्यदा तस्य राजर्षेर्वासवः स्वर्गिसंसदि । प्रशंसामकरोदेवं, नमस्कृतिपुरस्सरम् ॥ ५१ ॥ चन्द्रवर्मा नरेन्द्रर्षिर्जीयाद्यतिमतल्लिका । यस्य ब्रह्ममयं वर्म, दुर्भेद्यं त्रिदशैरपि ॥ ५२ ॥ इत्याकर्ण्य वचस्तस्य, विजयो नाम निर्जरः । आगत्य भरतक्षेत्रे, तत्परीक्षां व्यधादिति ॥ ५३ ॥ दिव्यं देवाङ्गनावृन्दममन्दानन्दसादरम् । निर्ममेऽवर्ण्यमेतेन, नर्मकर्ममनोरमम् ॥ ५४ ॥ तत्कलाकुशलं दिव्यैर्हावभावैर्नवैर्नवैः । क्षोभयामास राजर्षिं, गृहीतप्रतिमं वने ॥ ५५ ॥ आत्मारामैकविश्रामं, स्वान्तं तस्य महात्मनः । दुर्वातैरिव तैः क्षुब्धं, न परं मेरुमच्यवत् ॥ ५६ ॥ ततस्तुष्टमनाः स्पष्टभक्तिमृदमृताशनः । चकारेति स्तुतिं तस्य, सद्भूतगुणगर्भिताम् ॥ ५७ ॥ दानवीरास्तपोवीराः, विद्यावीराः परे पुनः । तृणवत्सुलभाः सन्ति, ब्रह्मचारी सुदुर्लभः ॥ ५८ ॥ यतः–अह्नाय वह्नौ बहवो विशन्ति, शस्त्रैः स्वगात्राणि विदारयन्ति । कृच्छ्राणि चित्राणि समाचरन्ति, माराविवीर विरला जयन्ति ॥ ५९ ॥ मत्तेभकुम्भदलने भुवि सन्ति शूराः, केचित् प्रचण्डमृगराजवधे प्रसक्ताः । किंतु ब्रवीमि भवतो बलिनः पुरस्तात्, कन्दर्पदर्पदलने विरला मनुष्याः ॥ ६० ॥ इति ॥ गुरून्नत्वा ततो नाकी, पृष्टवानिति विस्मितः । शीललीलायितैरेतैः, किं प्राप्तं साधुना फलम् ? ॥ ६१ ॥ गुरुराख्यत् सुरपृष्ठ !, तीर्थकृत्कर्म निर्मलम् । राजर्षिणाऽमुना लेभे, शीललीलोज्ज्वलात्मना ॥ ६२ ॥ भक्त्या राजर्षिमानम्य, ततो नाकी दिवं ययौ । सोऽप्यासीत् क्रमतो ब्रह्मलोके त्रिदशपुङ्गवः ॥ ६३ ॥ ततश्च्युत्वा जिनो भावी, विदेहे विश्ववत्सलः । विजये पुष्कलावत्या, चन्द्रवर्मा यतीश्वरः ॥ ६४ ॥ इत्थं लसच्छीलमहानुभावं, ये ब्रह्मदशं

स्थानकमाश्रयन्ति । ते चन्द्रवर्मेव जिनेन्द्रलक्ष्मीमासाद्य नित्योदयमाप्नुवन्ति ॥ ६५ ॥

## इति द्वादशस्थानके श्रीचन्द्रवर्मनरेन्द्रकथानकं समाप्तम् ॥

अथ त्रयोदशस्थानकाधिकारः, तत्र निरुपमतमशमरसाम्भोधिमग्नमनसा मुनिना सदा शुभध्यानं विधेयं, यतः—क्षणे क्षणे शुभध्यानं, विधातव्यं लवे लवे । समतायां स्वमारोप्य, प्रमादपरिवर्जनात् ॥ १ ॥ दुरन्तदुःखपरम्परानिमित्तमार्त्तरौद्रध्यानद्वयं परित्यज्य समग्रश्रेयःपरम्पराहेतुभूते धर्मध्यानशुक्लध्यानरूपे शुभध्याने मनो विधेयं, यतः— + अट्टेणं तिरियगई, रुद्दज्झाणेण गम्मए निरयं । धम्मेण देवलाए, सिद्धिगई सुक्कझाणेणं ॥ तल्लक्षणं यथा—सद्दाइविसयगिद्धो, सद्धम्मपरंमुहो पमायपरो । जिणमयमण-विक्खंतो, वट्टइ अट्टंमि झाणंमि ॥ ३ ॥ परवसणं अभिनंदिय, निरविक्खो निद्दओ निरणुतावो । हरिसिज्जइ कयपावो, रुद्दज्झाणोवगयचित्तो ॥ ४ ॥ जिणसाहूगुणकित्तणपसंसणा दाणविणयसंपुण्णो । सुअसीलसंयमरओ, धम्मज्झाणी मुणेयव्वो ॥ ५ ॥ अह खंतिमद्दवज्जवमुत्तीओ जिणमयप्पहाणाओ । आलंबणेहिं जेहिं, सुक्कज्झाणं समारुहइ ॥ ६ ॥ चतुर्धा तु शुभ-

---

+ आर्त्तेन तिर्यग्गतिः रौद्रध्यानेन गच्छति नरकम् । धर्मेण देवलोके, सिद्धिगतिः शुक्लध्यानेन ॥ २ ॥ शब्दादिविषयगृद्धः सद्धर्मपराङ्मुखः प्रमादपरः । जिनमतमनपेक्षमाणो वर्त्तते आर्त्ते ध्याने ॥३॥ परव्यसनमभिनन्द्यिता निरपेक्षो निर्दयो निरनुतापः। हृष्यति कृतपापो रौद्रध्यानोपगतचित्तः ॥ ४ ॥ जिनसाधुगुणोत्कीर्त्तनप्रशंसनः दानविनयसंपूर्णः । श्रुतशीलसंयमरतः धर्मध्यानी ज्ञातव्यः ॥ ५ ॥ अथ क्षान्तिमार्दवार्जवमुक्तयो जिनमते प्रधानाः । आलम्बनैर्यैः शुक्लध्यानं समारोहति ॥ ६ ॥

ध्यानं, पिण्डस्थादिविभेदतः । निश्छद्मसाम्यसंभूतं, भवकोटिरजोऽपहम् ॥ ७ ॥ यतः— [1] झाणं चउव्विहं होइ, तत्थ पिंडत्थयं पयत्थं च । रूवत्थं रूवाईय, एएसिमिमं च वक्खाणं ॥ ८ ॥ देहत्थं गयकम्मं, चंदाभं नाणिणं विऊ जत्थ । परमेसरीयं अप्पं, पिच्छइ तं होइ पिंडत्थं ॥ ९ ॥ मन्तक्खराणि सारीरपउमपत्तेसु चिंतए जत्थ । जोगी गुरूवएसा, पयत्थमिह वुच्चए तं तु ॥ १० ॥ पणतीस सोल छप्पण, चउ दुगमेगं च जाव झाएह । परमेट्ठिवायगाणं, अन्नं च गुरूवएसेणं ॥ ११ ॥ तत्र पञ्चपरमेष्ठिपदैः ३५, अरिहंतसिद्धआयरियउवज्झायसाहू १६, अरिहंतसिद्ध ६, असिआउसा ५, अरिहंत ४, सिद्ध २, अ० १, अथवा ॐ, तत्र अकारो लक्षयोजनप्रमाणः सुवर्णाभोऽमृतश्रावी स्वभावस्थो ध्येयः, ॐकारः काञ्चनाभो लोकालोकप्रमाणः विद्यासहस्रस्थानं सर्वदेवपूज्यः सर्वशान्तिकरः पञ्चपरमेष्ठिप्रथमाक्षरसंभवः सर्वदा ध्येयः, जं पुण सपाडिहेरं, समुसरणत्थं जिणं परमनाणिं । पडिमाइसमारोविय, झायइ तं होइ रूवत्थं ॥ १२ ॥ जं परमाणंदमयं, परमप्पाणं निरंजणं सिद्धं । झाएइ परमयोगी,

---

[1] ध्यानं चतुर्विधं भवति, तत्र पिण्डस्थं पदस्थं च । रूपस्थं रूपातीतं एतेषामिदं च व्याख्यानम् ॥ ८ ॥ देहस्थं गतकर्माणं चन्द्राभं ज्ञानिनं विद्वान् यत्र । परमैश्वर्यमात्मानं प्रेक्षते तद्भवति पिण्डस्थम् ॥ ९ ॥ मन्त्राक्षराणि शारीरपद्मपत्रेषु चिन्तयेद्यत्र । योगी गुरूपदेशात् पदस्थमिहोच्यते तत्तु ॥ १० ॥ पञ्चत्रिंशतं षोडश षट् पञ्च चत्वारि द्वे एकं च यावद्ध्यायत । परमेष्ठिवाचकानामन्यच्च गुरूपदेशेन ॥ ११ ॥ यत्पुनः सप्रातिहार्यं समवसरणस्थं जिनं परमज्ञानिनम् । प्रतिमादिसमारोपितं ध्यायति तद्भवति रूपस्थम् ॥ १२ ॥ यत्परमानन्दमयं परमात्मानं निरञ्जनं सिद्धम् । ध्यायति परमयोगी, रूपातीतं तदिह ध्यानम् ॥ १३ ॥

रूवाईयं तमिह झाणं ॥ १२ ॥ ध्यानं विधित्सता ज्ञेयं, ध्याता ध्येयं तथा फलम् । सिध्यन्ति न हि सामग्रीं, विना कार्याणि कर्हिचित् ॥ १४ ॥ इन्द्रियैः सममाकृष्य, विषयेभ्यः स्वमानसम् । धर्मध्यानकृते तस्मान्मनः कुर्वीत निश्चलम् ॥ १५ ॥ विरतः कामभोगेभ्यः, स्वशरीरेऽपि निःस्पृहः । संवेगहृदनिर्मग्नः, सर्वत्र समतां श्रयेत् ॥ १६ ॥ सुमेरुरिव निष्कम्पः, शशीवानन्ददायकः । समीर इव निस्सङ्गः, सुधीर्ध्याता प्रशस्यते ॥ १७ ॥ आत्मनश्चिन्मयं रूपं, परत्रैकतां गतम् । स्वदेहस्थं सदा ध्येयं, सुषियोपाधिवर्जितम् ॥ १८ ॥ निवेश्य हृदयाम्भोजे, पदानि परमेष्ठिनाम् । तद्वर्णे लयलीनात्मा, ध्यायेतानन्दमेदुरः ॥१९॥ अर्हन्तं कर्मनिर्मुक्तं, केवलज्ञानभास्करम् । आसीनं समवसृतौ, प्रातिहार्यविराजितम् ॥ २० ॥ ध्यानालम्बनतां नीत्वाऽथवा मूर्तिजिनेशितुः । मनसः स्थिरतां कुर्यान्निर्विकल्पं समाधिमान् ॥ २१ ॥ क्रमेणाभ्यासयोगेन, सम्यग्योगविदग्रणीः । संध्यायेत्परमात्मानं, निराकारं निरञ्जनम् ॥ २२ ॥ प्रच्छन्नपाप्मनः शुद्धिरिहाधिव्याधिनिर्गमः । परत्र परमैश्वर्यं, पदस्थध्यानसिद्धितः ॥ २३ ॥ अतीतानागतार्थानां, वेदिताऽष्टसमृद्धयः । बिन्दुनादवपुःशुद्धिः, पिण्डस्थध्यानयोगतः ॥ २४ ॥ रूपस्थध्यानलीनात्मा, क्लिष्टकर्मक्षयात् शमी । लभते केवलज्ञानं, प्राणी पुण्याढ्यभूपवत् ॥ २५ ॥ रूपातीतपदं ध्यायन्निष्कषायो विकल्पमुक् । ध्याता रूपविनिर्मुक्तश्चिदानन्दमयो भवेत् ॥ २६ ॥ तथा सुश्रावकेणाप्येतत्स्थानकं कुर्वता प्रमादपरिहारार्थं रागद्वेषपरिहाररूपं बहुशोऽपि सामायिकव्रतं विधेयं. यतः— *



* जीवः प्रमादबहुलो बहुशोऽपिच बहुविधेष्वर्थेषु । एतेन कारणेन बहुशः सामायिकं कुर्यात् ॥ २९ ॥ यः समः सर्वभूतेषु त्रसेषु स्थावरेषु च । तस्य सामायिकं भवति इति केवलिभाषितम् ॥ २६ ॥

एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ २७ ॥ जो समो सव-
जीवो पमायबहुलो, बहुसोवि य बहुविहेसु अत्थेसु ।
मूएसु, तसेसु थावरेसु अ । तस्स सामाइयं होइ, इइ केवलिभासियं ॥ २८ ॥ जन्मलक्षवतैरुग्रैर्यन्नैव क्षीयते क्वचित् । मनः
शमरसे लग्नं, तत्कर्म क्षपयेत्क्षणात् ॥ २९ ॥ शुक्ललेश्याविशुद्धात्मा, शुभध्यानसमाधिमान् । लभते तीर्थकृल्लक्ष्मीं, हरिवा-
हनभूपवत् ॥ ३० ॥ श्रीसाकेतपुरे पुण्यनृपोऽभूद्धरिवाहनः । विवस्वानिव तेजस्वी, सच्चक्रानन्दिमण्डलः ॥ ३१ ॥ युवराजोऽभव-
न्मेघवाहनस्तस्य सोदरः । विदुषां विद्विषां चक्रे, स वीरः सर्वदादरम् ॥ ३२ ॥ नानाक्रीडारसास्वादविवशात्मा विशांपतिः । प्रमा-
दपरवान् धर्मं, न करोत्यर्हतोदितम् ॥ ३३ ॥ यतः— * आलस्समोहऽवन्ना, थंभा कोहा पमाय किविणत्ता । भयसोगा अन्नाणा,
वक्खेवकुऊहलारमणा ॥ ३४ ॥ एएहिं कारणेहिं, लद्धूण सुदुल्लहंपि मणुअत्तं । लहइ सुइं हियकरिं, संसारुत्तारिणिं जीवो
॥ ३५ ॥ तत्रान्यदा चतुर्ज्ञानी, भव्याम्भोरुहभास्करः । शीलभद्राह्वयः सूरिप्रवरः समवासरत् ॥ ३६ ॥ युवराजस्तमानन्तुं,
श्राद्धश्रेष्ठिसामन्तव्यवहारिपुरस्कृतः ॥ ३७ ॥ निर्माय द्वादशावर्त्तवन्दनां विधिना पुरः । गुरुस्तस्योपवि-
विनीतः समुपागमत् । स श्राद्धश्रेष्ठिसामन्तव्यवहारिपुरस्कृतः ॥ ३७ ॥
ष्टस्य, यावद्धर्मं प्रकाशयेत् ॥ ३८ ॥ भवितव्यतया तावन्नरेन्द्रो वाजिकेलये । व्रजंस्तत्रागतोऽश्रौषीद्गिरं तेषां सुधास्रवाम् ॥ ३९ ॥
वाजिक्रीडां परित्यज्य, विस्मितात्मा नरेश्वरः । तत्रागत्य पदाम्भोजं, ववन्दे विनयी गुरोः ॥ ४० ॥ यतः—विनयं राजपुत्रेभ्यः,

१ विद्वत्पक्षे शश्वदादरं द्विट्पक्षे नित्यं भयं. * आलस्यं १ मोहः २ अवज्ञा ३ स्तम्भः ४ क्रोधः ५ प्रमादः ६ कृपणत्वम्
७ । भयं ८ शोकः ९ अज्ञानं १० व्याक्षेपः ११ कुतूहलं १२ रमणम् १३ ॥३२॥ एतैः कारणैर्लब्ध्वाऽपि सुदुर्लभं मनुजत्वम् । न लभते श्रुतिं
हितकरीं संसारोत्तारिणीं जीवः ॥ ३३ ॥

पण्डितेभ्यः सुभाषितम् । अनृतं धूतकारेभ्यः, स्त्रीभ्यः शिक्षेय कैतवम् ॥ ४१ ॥ प्रतिध्वनिविधायिन्या, सुधासोदरया गिरा । तदग्रे विदधे धर्मदेशनां श्रीगुरुस्तदा ॥ ४२ ॥ आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः, पोतमुज्झति पयोधिगतः सन् ॥ ४३ ॥ येन प्रभुस्वजनवैभवदेहगेहे, चिन्तातुरेण सुकृतं न कृतं कदाचित् । वैवाहिकव्यतिकराकुलितस्य तस्य, नो पाणिपीडनविधिः स्मृतिमाजगाम ॥ ४४ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुभारकर्मगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ४५ ॥ विषयाः पञ्च निद्राश्च, चतस्रो विकथास्तथा । कषायाः षोडश द्वेधा, मद्यं चेति जिनोदितैः ॥ ४६ ॥ द्वात्रिंशतोतिसक्तं, प्रमादं हन्ति यो रिपुम् । सोऽत्र मगधवेश्येव, लभते विजयध्वजम् ॥४७॥ युग्मं॥ अभूद्राजगृहे पुण्यलक्ष्मीलीलागृहे पुरे । वेश्या मगधसेनाख्या, विख्याता रूपसंपदा ॥ ४८ ॥ अन्या विज्ञाननृत्यादिकलानां कुलमन्दिरम् । सुरेन्द्रसुन्दरीतुल्या, नाम्ना मगधसुन्दरी ॥ ४९ ॥ परस्परं तयो रूपसौन्दर्याखर्वगर्वयोः । निजानेककलाभ्यासे, विवादोऽभूद्दिवानिशम् ॥ ५० ॥ ततो भूपादिभिः प्रोचे, तयोर्दर्पाभिभूतयोः । दर्शयतां कलां स्वां स्वां, संसदः पुरतोऽधुना ॥ ५१ ॥ ततो मगधसेना स्वं, गीतनृत्यादिकौशलम् । संसदोऽदर्शयत्तस्या, विस्मयो नाभवत्परम् ॥ ५२ ॥ सर्वाङ्गाद्भुतसौभाग्या, कलां दर्शयितुं निजाम् । रङ्गमण्डपमायासीत्ततो मगधसुन्दरी ॥ ५३ ॥ रत्नस्वर्णाद्यलङ्कारस्फारोदारवपुःश्रियम् । उत्फुल्ललोचनः कस्को, नापश्यद्विस्मयेन ताम्? ॥ ५४ ॥ विषमिश्रमहास्रचिसंयुतायां तु तद्भुवि । कर्णिकारद्रुपुष्पाणि, न्यग्मुखानि दुराशया ॥ ५५ ॥ कलिकाः सहकाराणां, तेषामुपरि सर्वतः । गोपिता गुरुणा स्वेन, तया मगधसेनया ॥ ५६ ॥ विमुच्य कर्णिकाराणि, सौरभ्यनिभृतान्यपि । पतन्तीं भ्रमरश्रेणिं,

मन्याम्रकलिकोत्करम् ॥ ५७ ॥ माता मगधसुन्दर्या, विदग्धाऽऽवलिमण्डनम् । निधाय कथयामास, गीतमध्येन तद्यथा ॥ ५८ ॥ भ्रमराः कर्णिकाराणि, दूरतः सुरभीण्यपि । विमुच्य सहकाराणां, मञ्जरीं समुपासते ॥ ५९ ॥ अर्थतः त्रिभिर्विशेषकम् ॥ विज्ञाय तदभिप्राय, साऽपि वक्रोक्तिकोविदा । अप्रमत्ततया तानि, परित्यज्याखिलान्यपि ॥६०॥ सृजन्ती चरणन्यासं, गीतनृत्यकलां निजाम् । अदर्शयत्तया तत्र, दक्षा मगधसुन्दरी ॥ ६१ ॥ अमन्दानन्दनिस्पन्दमग्ना राजादयो यथा । हेममाणिक्यरत्नानि, ददुस्तस्यै यथोचितम् ॥६२॥ त्रिभिर्विशेषकं कलावतीषु सर्वासु, तथा पण्याङ्गनास्वसौ । छत्रचामरसंयुक्तां, लेभे जयपताकिकाम् ॥६३॥ लोके मगधसेना तु, भूभृताद्यपमानिता । रवनाख्यगुरुणा सार्कं, लेभे सर्वत्र लाघवम् ॥ ६४ ॥ एवं यः पुण्यकार्येषु, न प्रमादं सृजेज्जनः । सोऽभीष्टां लभते सिद्धिं, सुखसंभारशालिनीम् ॥ ६५ ॥ निशम्येति गुरोः पार्श्वे, संवेगरससागरः । शिश्राय संयमं राजा, निजान्त पुरसंयुतः ॥ ६६ ॥ युवराजस्ततो राज्येऽभिषिक्तः सचिवादिभिः । राजेन्द्रलक्षणश्रेणिलक्षितो मेघवाहनः ॥ ६७ ॥ नरवाहनराजर्षि, वन्दित्वा मेघवाहनः । सद्दर्शनसखं श्राद्धधर्ममार्गमशिश्रियत् ॥ ६८ ॥ अधीत्य द्वादशाङ्गानि, राजर्षिस्तत्त्ववित् गुरोः । श्रीभद्राख्यमुनीन्द्रस्य, समीपे श्रुतवानिति ॥ ६९ ॥ विंशतिस्थानकान्येव, तीर्थकृत्पदसंपदः । आश्रया( वा ) मुनिभिः ख्याता, अर्हद्भक्तिमयात्मनः ॥ ७० ॥ तेषु त्रयोदशस्थाने, शुभध्यानं निरन्तरम् । विधेयं श्रीमता सम्यग्, साम्यवासितचेतसा ॥ ७१ ॥ रुद्ध्वा योगी कषायप्रसरमतिबलानिन्द्रियाश्वान्नियम्य, त्यक्त्वा व्यासङ्गमन्यं परमसुखपदप्राप्तये बद्धबुद्धिः । कृत्वा चित्तं स्थिरं स्वं शमरसकलितं सत्त्वमालम्ब्य गाढं, ध्यानं ध्यातुं यतेत प्रतिदिनममल शुद्धधर्मा मुनीन्द्र. ॥७२॥ आत्मन्येव मनो नियुज्य विषयद्वाराणि सर्वात्मना, योगेन प्रतिरुद्ध्य शुद्ध्यति पुनर्योगीश्वरः कोऽपि यः । तस्य स्यादमनस्क-

तापरिचयात् पञ्चेन्द्रियपरयाप्यह्नो, स्पष्टानिन्द्रियता मनः स्थिरतरं तत्त्वावबोधोदयः ॥ ७३ ॥ ध्यानाभ्यासाद्विषयविमुखोद्भूतसाम्योपयुक्तादात्मारामस्तदनु तनुते शाश्वतं स्वस्य तेजः । तस्य ज्ञानं प्रभवति विष व्याधयो वा न जन्तोः, देहैर्मुक्तः स भवति ततः कोऽपि लोकोत्तरश्रीः ॥ ७४ ॥ इत्याकर्ण्य गुरोर्वाच, स्थानं कुर्वंस्त्रयोदशम् । अप्रमत्तः शुभध्यानं, विदधे सर्वदापि सः ॥७५॥ निष्कषायमना मौनी, निःस्पृहैकशिरोमणिः । सर्वसङ्गविमुक्तात्मा, कायोत्सर्गासनोऽनिशम् ॥ ७६ ॥ शुक्ललेश्यान्वितो योगी, सुखदुःखसमाश्रयः । इहापि परमानन्दवर्णिकामन्वभूदसौ ॥ ७७ ॥ अन्यदा त्रिदशस्वामी, प्रशसा तस्य निर्ममे । अक्षोभ्योऽयं मुनिर्ध्यानान्नूनं नाकिशतैरपि ॥७८॥ पौलोमी भुवमायाताऽश्रद्दधाना हरेर्वचः । ततो देवाङ्गनावृन्दं, मोहसैन्यमिवोत्कटम् ॥७९॥ गीतनृत्यकलाकेलिं, दर्शयद्दर्शनप्रियम् । आविष्कृत्य मुनेस्तस्य, पुरः स्फुरदुरुद्युति ॥८०॥ षण्मासीं क्षोभयामास, स्वाङ्गोपाङ्गप्रकाशनैः । दुष्प्रापैर्देहिनामल्पसत्त्वानां च स्पृहावहैः ॥८१॥ त्रिभिर्विशेषकं । नासाग्रन्यस्तनेत्रस्य, न परं तस्य सन्मुनेः । क्षणमात्रमपि स्वान्तं, क्षोभमाप मनागपि ॥८२॥ इन्द्राग्रमहिषी प्रादुर्भूय भूयः स्वशक्तितः । ततो राजर्षिमानम्य, ययौ धाम सुधाभुजाम् ॥ ८३ ॥ स्वसत्तीकृत्य तीर्थेशकर्म शर्मादभुतं ततः । सनत्कुमारे देवोऽभूत्, राजर्षिर्वासवोपमः ॥८४॥ ततश्च्युतो विदेहोर्व्यां, कल्पनाकल्पपादपः । भावी जिनेश्वरः श्रीमान्, राजा श्रीहरिवाहनः ॥८५॥ निर्जराया निमित्तेषु, समता स्याद्गरीयसी । यया मुहूर्तमात्रेण, जन्तुर्याति पवित्रताम् ॥८६॥ यतः—प्रणिहन्ति क्षणार्द्धेन, साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥८७॥ श्रुत्वेति वृत्तं हरिवाहनस्य, सम्यक् शुभध्यानफलोज्ज्वलस्य । तीर्थंकरश्रीसुखसाधनेषु, पदेषु चेतो रमयत्वमीषु ॥ ८८ ॥

इति त्रयोदशस्थानकाधिकारे हरिवाहननृपकथानकं समाप्तम् ॥

*अथ चतुर्दशस्थानकस्वरूपं,* तत्र पूर्वोक्तस्वरूपे द्वादशप्रकारे तपसि विशेषतो यत्नो विधेयः, यतः—यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते, कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुन्मीलति । उत्सर्पन्ति महर्द्धयः कलयति ध्वंसं च यः कर्मणां, स्वाधीनं त्रिदिवं शिवं भवति च श्लाघ्यं तपस्तन्न किम् ? ॥ १ ॥ अपेति तपसा कर्म, निकाचितमपि क्षयम् । यदागमे गणधरैः, प्रोक्तमेवं तपःफलम् ॥ २ ॥ कर्म निर्जरयत्यन्नग्लायकः संयतो हि यत् । नरके नारका वर्षशतेनापि न तत्खलु ॥३॥ प्रातरेव क्षुधा ग्लायन्, यः स्यात् पर्युषिताऽशनः । अथवा निःस्पृहः प्रातर्भोज्यन्नग्लायकः स्मृतः ॥ ४ ॥ तथा चतुर्थभक्तेन, यत्कर्म क्षपयेन्मुनिः । न तन्नैरयिका वर्षसहस्रेणापि दुःखिताः ॥ ५ ॥ षष्ठभक्तेन या साधोर्निर्जरा कर्मणां भवेत् । लभन्ते नारका वर्षलक्षेणापि न तां ध्रुवम् ॥ ६ ॥ मुनेरष्टमभक्तस्य, निर्जरा क्लिष्टकर्मणः । या भवेद्वर्षकोट्यापि, न सा नरकवासिनः ॥ ७ ॥ दशमाहारिणो यावान्, क्षयो दुष्कर्मणां भवेत् । कोटाकोट्यापि वर्षाणां, न तावन्नारकाङ्गिनः ॥ ८ ॥ * अट्ठमभत्ते कोडी कोडाकोडी य दसमभत्तंमि । अओपरं बहुनिज्जाहेऊ नूणं तवो भणिओ ॥ ९ ॥ दुष्कर्मद्रुमभङ्गाय, द्विरदोपमविक्रमे । द्विविधे तपसि प्राज्ञ !, प्रमादं मा कृथा वृथा ॥ १० ॥ तप्यमानस्तपस्तीव्रं, मुनिः प्रशमशीतलः । वृणुते तीर्थकृल्लक्ष्मीं, मृत्कनकोत्तुवत् ॥ ११ ॥ अन्याङ्गिपरितापेन, निर्विविवेकतया पुनः । क्रियते सनिदानैर्यत्, पुण्यं पापानुबन्धि तत् ॥ १२ ॥

---

* अष्टमभक्ते कोटी कोटाकोटी च दशमभक्ते । अत परं बहुनिर्जराहेतु नूनं तपो भणितम् ॥ ९ ॥

× अविराहियजिणधम्मा निरवायं निरुवमं विगयसायं । भरहव्व लहंति जओ, पुण्णं पुण्णानुबंधि तयं ॥ १३ ॥ नीरोगाइगुणजुआ महड्ढिया कोणियव्व पावरया । पावाणुबंधिपुन्ना हवंति अन्नाणकट्ठेणं ॥ १४ ॥ जं पुण पावस्सुदया दरिद्दिणो दुक्खियावि पावंति । जिणधम्मं तं पुन्नाणुबंधि पावंति दयाइलवा ॥ १५ ॥ पावा पयंडकम्मा निद्धम्मा निग्घिणा निरुच्छाहा । दुहिया य पावनिरया पावणुबंधित्तयं लहइ ॥ १६ ॥ तथाहि भरतक्षेत्रे, क्षमाऽलङ्कारसंपदि । काम्पिल्ये नगरे नाकलोकवद्भोगशालिनि ॥ १२ ॥ आसीद्विश्वंभराभर्ता, प्रतिकर्त्ता प्रजाऽऽपदाम् । नाम्ना विश्वंभरस्तस्य, प्रिया च कनकावली ॥ १३ ॥ सूत्रामेवं पवित्रोऽभूत्तयोः सूनुरनूनरुक् । विनीतः कनककेतुः, केतुर्वद्वैरिणां कुले ॥ १४ ॥ स क्रमात् यौवने सर्वकलासु कुशलोऽजनि । मोहनीयोदयादेष, परं धर्मपराङ्मुखः ॥ १५ ॥ न रोचते नरेन्द्राय, सदा सुकृतशालिने । सम्यग्धर्मकलातीतः, स्वाङ्गजोऽपि मनागसौ ॥१६॥ अन्यदा नगरोद्याने, सूर्याभः श्रुतकेवली । श्रीशान्तिसूरिरायासीद्विश्वजीवहितावहः ॥१७॥ तत्रागत्य नरेन्द्रस्तं, मुनीन्द्रं सूनुना समम् । प्रणम्य भक्तितोऽश्रौषीन्मुदितो धर्मदेशनाम् ॥ १८ ॥ परोपकारिणां धुर्यो, धर्म एव श्रितेषु यः । ददाति निर्वृतिं

---

× अविराद्धजिनधर्मा निरपायं निरुपमं विगतासातम् । भरत इव लभन्ते यतः पुण्यं पुण्यानुबन्धि तत् ॥ १३ ॥
नीरोगादिगुणयुता महर्द्धिकाः कोणिकवत् पापरताः । पापानुबन्धिपुण्यात् भवन्ति अज्ञानकष्टेन ॥ १४ ॥
यत्पुनः पापस्योदयात् दरिद्रा दुःखिता अपि प्राप्नुवन्ति । जिनधर्मं तत् पुण्यानुबन्धि पापं दयाया लवात् ॥ १५ ॥
पापाः प्रचण्डकर्माणः निर्धर्माणो निर्घृणा निरुत्साहाः । दुःखिताश्च पापनिरताः पापानुबन्धिपापात्तं लभन्ते ॥१६॥ १ इन्द्रवत् २ पूर्णकान्तिः

स्वस्य, सत्तायामपि निःस्पृहः ॥ १९ ॥ ये धर्मेण विना सौख्यं, समीहन्तेऽर्त्तिवर्जितम् । पानीयमथने ते हि, सिद्धिं वाञ्छन्ति सर्पिषः ॥ २० ॥ यः प्राप्य दुष्प्राप्यमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः । क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥ २१ ॥ इत्यादिदेशनाप्रान्ते, पृथ्वीभृद् गुरुमब्रवीत् । असौ ममाङ्गजः स्वामिन् !, सद्गुणश्रेणिवानपि ॥२२॥ सम्यग्जिनेश्वरप्रोक्ते, न धर्मे कुरुते मतिम् । निदाने संपदामत्र, कदा साऽस्य भविष्यति ? ॥ २३ ॥ ततो यतिपतिर्व्याजहारेति पृथिवीपतिम् । अनया चिन्तया राजन्नलं तव दुरन्तया ॥ २४ ॥ जीवाः संसारिणः सर्वे, स्वकर्मवशवर्त्तिनः । भवितव्यतया धर्माधर्मभाजो भवन्ति हि ॥ २५ ॥ कोऽपि लङ्घयितुं नेष्टे, नरेन्द्र ! भवितव्यताम् । येन यत्रास्ति गन्तव्यं, तस्य चेष्टाऽपि तादृशी ॥ २६ ॥ अनुकूलो यदा कर्मपरिणामनृपो भवेत् । तदा धर्मे सुखेनैव, समीहा जायतेऽङ्गिन. ॥ २७ ॥ राजा स्माह मुनिं स्वामिंस्तर्हि नैव कदाचन । चिकित्सां रोगवान् कुर्यात्, क्षुधार्तो भोजनक्रियाम् ॥ २८ ॥ श्रुत्वेति भूभृतो वाचं, वाचंयमपतिर्जगौ । द्रव्यक्षेत्रादिसामग्र्या, येषां योगः कृताहृताम् ॥ २९ ॥ निर्वृत्तिर्भाविनी यत्र, काले तत्रैव भूपते ! तेषां निर्वृत्त्युपायेषूपक्रमः प्रायशो भवेत् ॥३०॥ युग्मम् दृष्टान्तः श्रूयतामत्र साधुभिस्त्रिभिरन्यदा । स्वमुक्तिप्राप्तये पृष्टः, सर्वविद्भगवान् जगौ ॥ ३१ ॥ अस्मिन्नेव भवे मुक्तिर्भाविनी भवतामिति । निश्चलं वचन ज्ञात्वा, साधवः सर्ववेदिनः ॥ ३२ ॥ प्रव्रज्यां ते परित्यज्य, संश्रित्य गृहमेधिताम् । चिरं बुभुजिरे भोगान्नारीभिः सह लीलया ॥ ३३ ॥ युग्मं ॥ पुन. प्रान्ते निजे भोगकर्मणि

१ पुण्यापुण्यक्षयान्मुक्तिरिति वचनात् पुण्यस्यापि क्षयविधानात्

क्षयमागते । स्वपापकर्म निन्दन्तः, संवेगामृतशीतलाः ॥ ३४ ॥ त्रयोऽपि प्राप्तचारित्राः, शुक्लध्यानैकशालिनः । आसाद्य केवल-ज्ञानं, मुक्तिमीयुर्मुनीश्वराः ॥ ३५ ॥ कोटाकोटिमिता जन्तोः, सप्तानामपि कर्मणाम् । स्थितिर्यदा भवेद्धर्मे, रुचिः स्यादार्हते तदा ॥ ३६ ॥ यतः—[×] सत्तण्हं पयडीणं, अब्भितरओ अ कोडाकोडीणं । काऊण सागराण जइ लहइ चउण्हमन्नयरं ॥ ३७ ॥ तत्राप्ययं तनूजन्मा, क्रमादत्रैव जन्मनि । भूयोभावमले क्षीणे, भावी सद्धर्मतत्परः ॥ ३८ ॥ ततः पुण्यानुभावेन, भवे राजन् ! तृतीयके । भविष्यति विदेहोर्वीमण्डनं श्रीजिनेश्वरः ॥ ३९ ॥ एवं गुरोर्गिरं श्रुत्वा, प्रबुद्धः पृथिवीपतिः । प्रदाय सूनवे राज्यं, निजं तस्मै कृतोत्सवम् ॥ ४० ॥ जग्राह संसृतिग्राहमुक्तां मुक्ताफलोज्ज्वलाम् । तपस्यां तपसा प्राज्यां, भवको-टिरजोऽपहाम् ॥ ४१ ॥ प्रपद्यमानश्चारित्रं, पवित्रो भूपतिस्तदा । बभूव केवलज्ञानी, शुक्लध्यानानुभावतः ॥ ४२ ॥ युग्मं ॥ राजापि कनककेतुः, प्रतापप्रथितप्रभः । न्यायेन पालयामास, प्रजा इव निजप्रजाः ॥ ४३ ॥ दाघज्वरेण तीव्रेणान्यदा तप्तव-पुर्नृपः । निद्रादरिद्रः शुश्राव, श्लोकं दुःखातुरो निशि ॥ ४४ ॥ सुखाय सर्वजन्तूनां, प्रायः सर्वाः प्रवृत्तयः । न धर्मेण विना सौख्यं, धर्मश्चारम्भवर्जनात् ॥ ४५ ॥ ततः संजातसंवेगो, हृद्येवं ध्यातवान्नृपः । प्रातर्व्रतं ग्रहीष्यामि, मुक्त्वा मोहं भवोद्भवम् ॥ ४६ ॥ एवं विदधतस्तस्य, धर्मकर्ममनोरथम् । सखी सुखस्य निद्राऽऽगात्सर्वरोगोपशान्तितः ॥ ४७ ॥ ततः प्रातः पवि-त्रात्मा, कृतपथ्यक्रियाविधिः । निवेद्य सचिवादीनां, वृत्तान्तं रजनीभवम् ॥ ४८ ॥ हेमकोटिव्ययं कृत्वा, सुपात्रेषु प्रमोदतः । तनूजं



× सप्तानां प्रकृतीनां अभ्यन्तरतश्च कोटीकोट्याः । कृत्वा सागरोपमाणां यदि लभते चतुर्णामन्यतरत् ॥३७॥ . १ भवप्रतिरम्भादिरहितां

मलयकेतुं, निजे राज्ये निवेश्य च ॥ ४९ ॥ शान्तिसूरिगुरोः पार्श्वे, स संवेगतरङ्गितः । दीक्षामुपाददे सार्वां, राजन्यसचिवादिभिः ॥ ५० ॥ निर्मिर्विशेषकं ॥ स पठन् द्वादशाङ्गानि, जितानङ्गो मुनीश्वरः । गुरोर्गिराऽन्यदाऽश्रौषीत्, स्थानकाख्यतपःफलम् ॥ ५१ ॥ विंशतिस्थानकान्यर्हद्भक्त्या निर्निक्तयाऽन्वितैः । विधत्ते विधिवत्सम्यग्दृष्टिर्वैशिष्ट्यहेतवे ॥ ५२ ॥ चतुर्दशपदे तत्र, सर्वाशाहितं यदि । तपो विधीयते तीर्थकृत्पदं प्राप्यते तदा ॥ ५३ ॥ यतः—यथैवोपचितो दोषः, शोषमायाति लङ्घनात् । तथैव तपसा कर्म, क्षीयते पूर्वसंचितम् ॥ ५४ ॥ श्रुत्वेति स मुनिप्रष्ठस्तपसि द्वादशात्मनि । जग्राहाभिग्रहं घोरं, वैराग्यव्यवसायवान् ॥ ५५ ॥ ततश्चतुर्थादारभ्य, षण्मासान्तविवृद्धिमत् । त्रिरर्हद्वन्दनापूर्वं, विधेयं विधिवन्मया ॥ ५६ ॥ उञ्छवृत्त्या यथाप्राप्तैर्निर्दोषैर्भक्तपानकैः । आचामाम्लं तथा कार्यं, प्राणान्तेऽपि हि पारणे ॥ ५७ ॥ युग्मं ॥ ततस्तीव्रं तपः कुर्वन्, संतोषानन्दवान् मुनिः । स्थूल एवाभवत्सूक्ष्मो, ग्रीष्मे भीष्मे यथाम्बुधिः ॥ ५८ ॥ अथ शङ्खपुरोपान्ते, तप्तौ तप्तभूतले । आतापनां वितन्वानं, कर्मणां तनुताकृते ॥ ५९ ॥ निर्माय तद्गुणश्लाघामस्ताघां मघवा दिवि । प्रणनाम नमन्मौलिर्भक्तितस्तं महामुनिम् । ॥६०॥ युग्मं ॥ तद्गुणस्तुतिमाकर्ण्य, सौसूयो वरुणाभिधः । लोकपालः परीक्षार्थमाययौ भारतावनौ ॥ ६१ ॥ विधायानेषणादोषान्, शुद्धोञ्छे प्रतिसद्मसु । खदिराङ्गारसंकाशा, रथ्यायां वालुकास्तथा ॥६२॥ षण्मासीं क्षोभयामास, राजर्षि रोषणाशयः । मनागपि न चुक्षोभ, स पुनः सत्त्वसागरः ॥ ६३ ॥ अथास्ति नगरे तत्र, व्यवहारी धनञ्जयः । धन्यानामग्रणीः सर्वपौरलोकप्रियङ्करः ॥ ६४ ॥

१ निर्मलया  २ युक्तः  ३ बहुलम्  ४ इन्द्र.  ५ ईर्ष्यायुत

तस्य गृहे त्रिधा शुद्धशीलमाहात्म्यत सुराः। निर्मातुं नेशते क्रूरा, उपसर्गं मनागपि ।६५। देवोपसर्गसंसर्गं, ज्ञात्वा ज्ञानोपयोगतः। तदीयवेश्मनि प्रैषि, गुरुणा पारणाय सः ॥६६॥ तत्र शुद्धान्नसंप्राप्तौ, पारणं विदधे मुनिः । हैमवृष्टिं तदाऽकार्षीद्, हृष्टोऽथ वरुणस्तदा ॥ ६७ ॥ प्रत्यक्षीभूय संभूयस्तपोभिस्तपनप्रभम् । लोकपालो नमस्कृत्य, राजर्षिं स्तुतवानिति ॥ ६८ ॥ धन्यस्त्वमसि राजर्षे !, वन्द्योऽसि मरुतामपि । यस्येदृशी मनोवृत्तिर्निष्कम्पया निरन्तरम् ॥ ६९ ॥ इन्द्रस्वरूपमाख्याय, स नत्वा गुरुमब्रवीत् । दुष्करतपस्य तपसो, महर्षेरस्य किं फलम् ? ॥७०॥ चतुर्दशपदं शुद्धं, तपसा कुर्वताऽमुना । अर्जितं तीर्थकृत्कर्म, साधुना शमसिन्धुना ॥७१॥ गुरुणेति तदादिष्टे, प्रणम्यासौ ययौ दिवम् । राजर्षिरपि माहेन्द्रे, देवोऽभूद्भासुरः क्रमात् ॥ ७२ ॥ ततो विदेहे जैनेन्द्रपदं प्राप्य गुणोत्तमम् । चिदानन्दपदस्वामी, स राजर्षिर्भविष्यति ॥७३॥ इति चतुर्दशमार्हतभक्तितः, पदमनन्तसुखोदयदायकम् । कनककेतुनरेन्द्र इवानिश, सृजति यः स भवेत्त्रिजगत्पतिः ॥ ७४ ॥

॥ इति चतुर्दशस्थानकाराधनाविषये कनककेतुनरेन्द्रकथानकं संपूर्णम् ॥

॥ अथ पञ्चदशस्थानकस्वरूपं ॥ तत्र विवेकिना सुपात्रेषु निर्णिक्तभक्तिरागपुरस्सरं सर्वश्रेयोनिदानं दानं विधेयं, यतः—धर्मस्य मूलं पदवी महिम्नः, पदं विवेकस्य फलं विभूतेः । प्रागाः प्रभुत्वे प्रतिभूश्च सिद्धेर्दानं गुणानामिदमेकमेव ॥ १ ॥ स्वर्गापवर्गयोस्तस्य, पदवी न दवीयसी । प्रदत्तेः यः सुपात्रेषु, दानं श्रीशालिभद्रवत् ॥ २ ॥ स्मृतानि तत्र पात्राणि, द्रव्यभावविभेदतः । द्विविधानि प्रधानादिरूपाणि तत्त्ववेदिभिः ॥ ३ ॥ रत्नगाङ्गेयरूप्यादिपात्राणि व्यवहारिणाम् । सर्वोत्तमोत्तमानि स्युर्द्रव्यपात्राणि वेश्मसु ॥ ४ ॥ ताम्रादिधातुपात्राणि, मध्यमानि यथा भुवि । लोहादिधातुरूपाणि, जघन्यानि गृहे गृहे ॥५॥ मृन्मयादीनि पात्राणि, गृहस्थाभासशालिनाम् । कुपात्रापात्ररूपाणि, भवन्ति व्याप्टतौ सदा ॥६॥ अमूनि भावपात्राणि, ख्यातानि जिनशासने। प्रदत्तं विधिवद् येषु, प्रायोऽनन्तगुणं भवेत् ॥७॥

नरवाहनै एवाभूवस्य रूपरमोपमा ॥ २४ ॥ तस्याऽभूत् प्रतिभाम्भोधिर्धिरश्मिः सचिव प्रणीः । गम्भीरिमपरं श्रीमान्, [5]धीवरैःपरितो वृतः ॥ २५॥ ऋषभस्व जिनश्चैत्य, सत्यंकारं शिवश्रियः । मन्त्रिणा निर्मितं तेन, तत्र चित्रीयितामरम् ॥२६॥ आगच्छन्नन्यदा भूपांस्तदालोकनकौतुकी। धनेश्वरमहेभ्यस्य, पुरोगस्य वेश्मनि ॥२७॥ दृष्ट्वा महोत्सवश्रेणीं, प्रीणिताखिलमार्गणाम् । पप्रच्छ सचिवं केन, हेतुनाऽत्र महो महान् ? ॥२८॥ मन्त्र्युवाच विभो! पुत्रजन्माभूदस्य वेश्मनि । जायते स्वजनानन्दी, तेनात्रायं महोत्सवः ॥२९॥ नरेन्द्रोऽथ जिनेन्द्रस्य, चैत्यं चन्द्रांशुनिर्मलम् । दृष्ट्वा दृष्टिफलं लेभे, बोधिबीजं च हर्षतः ॥ ३० ॥ नमस्कृत्य जिनेन्द्रस्य, प्रतिमां रत्ननिर्मिताम् । तत्र भक्तिपवित्रात्मा, वेश्मागान्नृपतिस्ततः ॥३१॥ द्वितीयेऽथ दिने श्रुत्वा, पुनस्तत्रैव भूपतिः । अकस्मात्स्वजनश्रेणिं शोकाक्रन्दपरम्पराम् ॥३२॥ उवाच सचिवं कस्माद्, दुस्सहः करुणध्वनिः? । सोऽप्याख्यत्स सुत. स्वामिन्नामेशेषोऽजनि क्षणात् ॥ ३३ ॥ अपुत्रस्य ततः श्रेष्ठिपुङ्गवस्य गृहेऽधुना । निर्भरं सन्ति शोकार्त्तजना क्रन्दन्त्युरस्तुदाः ॥ ३४॥ निशम्येति वचस्तस्य, राजा संवेगपूरितः । अनित्योऽयं भवाभोगः, सर्वो हि ध्यातवान् हृदि ॥ ३५ ॥ तस्मिन्नवसरे तत्र, श्रीधनेश्वरसूरयः । आययुर्जगदम्भोजराजीराजीवबन्धवः ।३६। मुनीन्द्रांस्तान्नरेन्द्रोऽथ, नमस्कर्तुं तदाऽगमत् । तदग्रे गुरुभिर्धर्मदेशनां निर्ममे यथा ॥ ३७ ॥

भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं, माने म्लानिभयं जये रिपुभय वंशे कुयोषिद्भयम् । दासे स्वामिभयं गुणे खलभयं देहे कृता-

५ वैश्रमण. ६ बुद्धिशालिभि. ७ आश्चर्यं गमिता अमरा येन. ८ पुरोत्तमस्य.
१ मृतः २ जाताः सन्ति. ३ भवविस्तार

क्षीणमोहयथाख्यातचारित्रगुणभूषितम् । रत्नपात्रोपमं पात्रं, प्राहुः सर्वोत्तमं बुधाः ॥ ८ ॥ सम्यग्ज्ञानक्रियोपेतं, प्रशान्तमनगारिणम् । लाभालाभसमस्वान्तं, स्वर्णपात्रोपमं जगुः ॥ ९ ॥ सम्यग्दर्शनसंशुद्धद्वादशव्रतभूषिताः । रूप्यपात्रोपमा भेजु, सर्वेऽपि गृहमेधिनः ॥ १० ॥ चतुर्थे ये गुणस्थाने, विशुद्धे सर्वदा स्थिताः । ते श्रेणिक इवाख्यातास्ताम्रपात्रोपमाः सताम् ॥ ११ ॥ मृदादिपात्रतुल्यश्च. मिथ्यादृष्टिर्जनोऽखिलः । गुणेन केनचिद्युक्तो, धर्ममार्गानुसारिणा ॥ १२ ॥ सदा पञ्चाश्रवासक्ता, अजिताक्षा मदोद्धताः । अपात्राणि भवन्त्यत्र, तत्त्वमार्गपराङ्मुखाः ॥१३॥ परं ये प्राणिनो दीनाः, क्षुत्पिपासादिपीडिताः । दातव्यं कृपया तेषु, यथाशक्ति विवेकिना ॥१४॥ तथा—+उत्तमपत्तं साहू मज्झिमपत्तं तु सावया भणिया । अविरयसम्मद्दिट्ठी जहन्नपत्तं मुणेयव्वं ॥ १५ ॥ अन्यत्राप्युक्तं—मिथ्यादृष्टिसहस्रेषु, वरमेको ह्यणुव्रती । अणुव्रतिसहस्रेषु, वरमेको महाव्रती ॥१६॥ महाव्रतिसहस्रेषु, वरमेको जिनाधिपः । जिनाधिपसमं पात्रं, न भूतं न भविष्यति ॥१७॥ इति । ज्ञानाभयसुपात्रादिभेदैर्दानमनेकधा । तथापि पात्रदानेनाधिकारोऽत्र निवेदितः ॥ १८ ॥ वस्तुतो यतयः सर्वसावद्यारम्भवर्जकाः । सर्वोत्तमतया पात्रं, निगदन्ति मनीषिणः ॥१९॥ सद्बोधिज्ञानचारित्रतपोभिर्विमलात्मनाम् । मुनीनां संविभाग यो, विशुद्धैरन्नपानकैः ॥२०॥ विधत्ते प्रत्यहं भक्त्या, नरवाहनभूपवत् । तीर्थंकरपदवीं प्राप्य, मोदतेऽसौ शिवश्रिया ॥२१। तथाहि:—देशः कलिङ्गनामास्ति, भरतक्षेत्रभूषणम् । प्रजास्वीतिरनीतिर्श्च, यस्मिन्नाभैव विश्रुते ॥ २२ ॥ काञ्चनाचलवत्तत्र, पुरं काञ्चनमित्यभूत् सनन्दनैश्रियोपेतं, सुवर्णस्थितिपेशलम् ॥ २३ ॥ तत्रासीत्सीरभृत्तेजा, राजा श्रीनरवाहनः ।

---

+ उत्तमपात्रं साधुर्मध्यमपात्रं तु श्रावका भणिताः । अविरतसम्यग्दृष्टयः, जघन्यपात्रं ज्ञातव्यम् ॥ १५ ॥

१ ईतय उपद्रवाः अनीतिश्च व्यसनं । २ शोभननन्दनाख्यवनलक्ष्म्या सत्पुरुषानन्दनसमृद्ध्या च। ३ काञ्चनम् शोभनवर्णश्च ४ बलदेवः

न्ताद्भुत, सर्वं नाम भय भवेदिदमहो वैराग्यमेवाभयम् ।३८। यथा कुमारी स्वपनान्तरेषु, जातं च पुत्र च मृतं च पश्येत् । जातेति हृष्टा विगतेति खिन्ना, तथा जना जानत सर्वभावान् ॥ ३९॥ इति । नृपोऽप्यवसरं प्राप्य, स पप्रच्छ मुनीश्वरम्। धनेश्वरगृहे हर्षो, विषादश्च कथं विभो ! ॥ ॥४०॥ गुरुर्जगाद राजेन्द्र !, फलं प्राचीनकर्मण. । सर्वोऽपि लभते प्राणी, मोहमूढमनाः खलु ॥ ४१ ॥ धर्मार्थी स्यागवानेष, श्रेष्ठी प्राचीन-जन्मनि ॥ जन्तून् सन्तापयामास, तस्येदं कर्मणः फलम् ॥ ४२ ॥ मिथ्यात्वमानशोकाख्यैर्मोहस्य सुभटैस्त्रिभिः । सर्वोऽपि पीडितो जन्तु-रुन्मत्त इव चेष्टते ॥ ४३ ॥ मिथ्यात्वमोहितः प्राणी, कृत्याकृत्यबहिर्मुखः पशूपलतरुश्रेण्यादिदेवबुद्धया नमस्यति ॥४४ ॥ मोहितात्मा भवा वर्ते, मिथ्यादर्शनमन्त्रिणः । सम्यग्देवादितत्त्वेषु, भवेत्प्रायः पराङ्मुखः ॥ ४५ ॥ यतः—जन्मन्येकत्र दुःखाय, रोगोऽन्यत्वं विषं रिपुः । अपि जन्मसहस्रेषु, मिथ्यात्वमचिकित्सितम् ॥ ४६ ॥ न सर्वज्ञा न नीरागाः, शङ्करब्रह्मविष्णव । प्राकृतेभ्यो मनुष्येभ्योऽप्यसमञ्जसवृत्तयः ॥४७॥ अब्रह्मचारिणः शश्वत्, पट्कायारम्भिणश्च ये । मूढात्मा तान् गुरून् कृत्वा, भवाम्भोधिं तितीर्षति ॥ ४८ ॥ रङ्कोऽपि देहभृद्राजन्नभिमानेन पूरितः । आत्मानं मन्यते मूढो, गरीयांसं नृपादपि ॥ ४९॥ यतः—शौर्यमदो भुजदर्शी, रूपमदो दर्पणादिदर्शी च । काममदः स्त्रीदर्शी विभ-वमदस्त्वेष जात्यन्ध ॥५०॥ अस्तोकशोकसंग्रस्तचैतन्यो निर्विवेकहृत् । इष्टे स्वल्पेऽपि नष्टे तु, रङ्कवद्रोदिति ध्रुवम् ॥५१॥ स एव मुच्यते मोहभटैरेभि. शरीरभाक्। यो जिनं शरणीकृत्य, तपस्तपति दुस्तपम् ॥५२॥ यतः—इष्टे नष्टे सुखभ्रष्टे, कष्टे निकटवर्तिनि । अमूढमनसां युक्तं, वैराग्याभरण तपः ॥ ५३ इति तद्देशना श्रुत्वा, मोहमुक्तो नरेश्वरः । भवभोगविरक्तात्मा, दीक्षामादत्त तत्क्षणे ॥ ५४ ॥ राजर्षिर्निरतीचार, चारित्रं प्रतिपालयन् । अध्यैष्ट द्वादशाङ्गानि, विनीतप्रतिभाद्गुनः ॥५५॥ विंशतिस्थानकतप.फलोद्भवविभाविनीम् । देशनामन्यदाऽश्रौषीत्, स मुनिर्गुरुसन्निधौ ॥५६॥ अन्नपानैर्निजानीतैर्विशुद्धैर्भक्तिनिर्भरम् । संविभागं वितन्वानो, मुनीनां गुणशालिनाम् ॥५७॥लभते [illegible]

संयमी भवेत् सम्यक्कारणसामग्री, कार्यसिद्धौ हि साधनम् । ५८॥ यथ लब्धान्नपानाद्यैरनिन्द्यैः सर्वसाधुषु । संविभागं विधायैव शेषं भोक्तव्यमात्मना ॥५९॥ गुरोर्गिराऽथ राजर्षिः, स जग्राहेत्यभिग्रहम् । असंविभागिनः सिद्धिर्यतो नैव मुनेर्भवेत् ॥६०॥ यतः—भैक्षांशदानं भिक्षुभ्यो, यद्भिक्षोरनवद्य-कम् । जिनैस्तद्दानमेवैकं, धर्मे मुख्यं प्रगीयते ।६१॥ असंविभागिनो गच्छवासिनो नोदरंभरेः । जगदे जगदेकाचार्यैर्नाप्येकस्या पि निर्वृतिः ॥६२॥ इति । निर्विशेषं ततस्तस्य, गच्छवासिषु साधुषु । संविभागं मन शुद्ध्या, कुर्वतः प्रतिवासरम् ॥६३॥ प्रशंसा त्रिदशेश्वक, चमरेन्द्रस्य संसदि । विनाऽमुं संविभागेऽस्ति, न मुनिः कोऽपि तत्परः ॥६४॥ साधुरूपं विनिर्माय, मायया दययोज्झितः । सुरः सुवेलनामाऽऽगात्रिर्मातुं तत्परीक्ष-णम् ॥ ६५ ।। नैषेधिकीं विधायासौ, तत्र तावद्बुभुक्षितः । कच्छनीवृति राजर्षिरपि श्रीपुरपत्तने ॥ ६६॥ विहृत्य भक्तपानादि, समायात उपाश्र-यम् । विशुद्धं ददृशे मायासाधवे श्रद्धयाऽखिलम् ॥६७॥ यावज्ज्ञानिमानीय, भक्तादि मुनिसत्तमः । गुरुभ्यो विधिनाऽऽलोच्य, पारणाय निवि-ष्टवान् ॥ ६८॥ निर्ममे वेदना तावत्तस्य देहेऽतिदुस्सहा । साधोर्मायाविना तेन, निर्विवेकेन नाकिना ॥ ६९ ॥ युग्मम् । विज्ञाय वेदनावेगमङ्गे तस्य महामुनेः । गुरवो विदधुः खेदं, मानसे मुनिभिः समम् ॥ ७० ॥ गुर्वादिष्टं ततो वैद्योपदिष्टं भैषजं जवात् । प्रायोग्यं तस्य राजर्षेरानीतमनगा-रिभिः ॥ ७१ ॥ राजर्षिर्नैव गृह्णाति, कथमप्यौषधं हि तत् । विज्ञप्तिं च व्यधाद्भक्त्या, गुरूणामिति साञ्जलिः ॥ ७२ ॥ कस्मैचन सुपात्राय, पुण्यगात्राय साधवे । अदत्त्वा भैषजं नैव, मम कर्तुं हि युज्यते ॥७३॥ संविभागव्रतं स्वामिन्!, प्राणान्ते न त्यजाम्यहम् । अक्षरं नश्वरस्यास्य, शरीरस्य कृतेऽधुना ॥ ७४ ॥ संविभागं सुखाभोगनिदानं मुनिष्वनवद्यम् । धन्या एव वितन्वन्ति, दशधा धर्मधारिषु ॥ ७५ ॥ संविभागव्रतो लक्षे, बाहुनामा मुनीश्वरः । भरते भरतक्षेत्रे, सार्वभौमाग्रणीर्नृपः ॥७६॥ तदाधिकाधिका तस्य, शरीरे वेदनाऽजनि । असुरेण कृता तेन, कृतान्त-

१ जिनकल्पिकादेः

क्रूरचेतसा ॥ ७७ ॥ परं राजर्षिणा तेन, संविभागव्रतं निजम्। न मुक्तं सर्वशक्त्या हि, विनयं तन्वता गुरौ ॥ ७८ ॥ तद्भावं तादृशं ज्ञात्वा, संविभागे विपद्यपि। प्रशान्तात्मा पुरः साक्षादभूदद्भुतवैभवः ७९ ॥ ततः सुधामयीं वृष्टिं, तस्योपरि व्यधादसौ। शशाम तत्क्षणादेव, तत्कृता तद्व्रुव्यथा ॥ ८० ॥ ततः प्रणम्य राजर्षिं, सुरः सूरिं व्यजिज्ञपत्। संविभागव्रतस्थैर्यात्, किं फलं प्राप्सवानयम् ॥ ८१ ॥ स आख्यत्तीर्थकृत्कर्म, बबन्धे साधुनाऽमुना। ततः सोऽपि निजं धाम, जगाम नतिपूर्वकम् ॥ ८२ ॥ आराध्य तादृशं साधुसंविभागव्रतं पुनः। राजर्षिरपि देवोऽभूदच्युताख्ये त्रिविष्टपे ॥ ८३ ॥ ततश्च्युतो विदेहोर्वीभूषणं दूषणोज्झितः। भावी तीर्थकरः श्रीमान्, नरवाहनभूपतिः ॥ ८४ ॥ श्रुत्वेति वृत्तं नरवाहनस्य, भूपस्य तीर्थंकरशर्मसारम्। भक्त्या मुनीनां श्रुतशीलभाजां, सृजन्तु भव्याः किल संविभागम् ॥ ८५ ॥

इति श्रीपञ्चदशमस्थानके पात्रदानोपरि नरवाहनकथानकं संपूर्णम् ॥

## ॥ अथ षोडशस्थानकव्याख्या विधीयते ॥

तत्रार्हदाचार्योपाध्यायसाधुबालवृद्धग्लानतपस्विचैत्यश्रीश्रमणसङ्घादिषु सम्यग्दर्शनपूतात्मना मुनिना सुश्रावकेण वा विशुद्धाशयपूर्वं वैयावृत्त्यं विधेयं. यतः *–वेयावच्चं निअयं, करेह उत्तमगुणे धारंताणं। सव्वं किर पडिवाई, वेयावच्चं अपडिवाई ॥ १ ॥ पडिभग्गस्स मयस्स य नासइ चरणं सुअं अगुणणाए। न हु वेयावच्चकयं, सुहोदयं नासए कम्मं ॥ २ ॥ वैयावृत्त्यं मनःशुद्ध्या,

* वैयावृत्त्यं नित्यं कुरुतोत्तमगुणान्धारयताम्। सर्वं किल प्रतिपाति वैयावृत्त्यमप्रतिपाति। १। प्रतिभग्नस्य मृतस्य च नश्यति चरणं श्रुतमगुणनया। नैव वैयावृत्त्यकृतं शुभोदयं नश्यति कर्म। २।

विधेय यो जिनादिषु । शृणुतेऽसौ जिनेन्द्रस्य, श्रिय जीमूतकेतुवत् ॥ ३ ॥ तथाहि—जम्बुद्वीपाभिधे द्वीपे, क्षेत्रे दक्षिणभारते । पुरं पुष्प-पुरं नाम, धामासीदद्भुतश्रियाम् ॥ ४ ॥ जयकेतुः पतिः पृथ्व्याः, पृथुवरप्रथितप्रभः । तत्राऽजनि प्रिया तस्य, जयमाला च विश्रुता ॥ ५ ॥ तदङ्गजो रजोऽतीतगुणाभिविराजितः । जीमूतकेतुनामाभूद् भूभारधरणे क्षम. ॥ ६ ॥ लावण्यपुण्यं यद्रूपं, दर्शं दर्शं मृगेक्षणाः । निजेक्षणविनिर्माणं, मेनिरे सफलं न का.? ॥ ७ ॥ पितुः प्रसादतः प्राप्य, यौवराज्यं स यौवने । जगतीं रञ्जयामास, निर्मलैरपि सद्गुणैः ॥ ८ ॥ अथ क्षितितलाख्याते, रत्नस्थलपुरेऽभवत् । सूरसेनः क्षमापालः, पत्रावरसपक्षसम्पदाम् ॥ ९ ॥ यशोमती सुता तस्य, विश्वैरवकौमुदी । आसीनि.सीमसौभाग्या, कलाभिरिव भारती ॥ १० ॥ जीमूतकेतुसौन्दर्यातिशयं विश्वविश्रुतं । उद्याने किन्नरैर्गीयमानमा-नन्ददायिनम् ॥ ११ ॥ श्रुत्वा तत्करग्रहणसमीहापूरिताधिरम् । नृपाङ्गजा वरं नान्यं, वुवूर्षति कथञ्चन ॥ १२ ॥ युग्मम् ॥ तस्यास्तदाशयं ज्ञात्वा, ततो मन्त्रिविचारतः । स्वयंवरे समाहूतो, जीमूतो भुभृतादरात् ॥ १३ ॥ स सेनया समागच्छन्, तत्पुरं प्रति भूपभूः । मार्गः सिद्धिपुरोपान्ते मूर्छामासेदिवानथ ॥ १४ ॥ मन्त्रौषधादिभिर्भिषग्प्रमुखैर्मुख्यपूरुषैः । उपचाराः कृतास्तस्य, भूयासोऽपि स्वशक्तितः ॥ १५ ॥ कुपात्रे दानवत्सर्वे, तेऽभूवन्निष्फलाः परम् । सम्यग्ज्ञानं विना यस्मान्न क्रिया फलदायिनी ॥ १६ ॥ तदाऽकलङ्कदेवाख्यः, सूरि-र्भूरिगुणोदधिः । तेषां पुण्योदयादागात्तत्र श्रीश्रुतकेवली ॥ १७ ॥ तस्यानुभावतो मूर्छापगमादुत्थितः क्षणात् ॥ तत्राऽऽगाय नमस्कर्तुं, राजसूनु प्रमोदतः ॥ १८ ॥ तस्य प्रबोधमाधातुं, गुरुणा करुणाब्धिना । विदधे देशना सम्यक्तत्त्वमार्ग-प्रकाशिनी ॥ १९ ॥

क्रूरचेतसा ॥ ७७ ॥ परं राजर्षिणा तेन, संविभागव्रत निजम् । न मुक्तं सर्वशक्त्या हि, विनयं तन्वता गुरौ ॥ ७८ ॥ तद्भावं तादृशं ज्ञात्वा, संविभागे विपश्चिति । प्रशान्तात्मा पुरः साक्षादभूदद्भुतवैभवः ७९ ॥ ततः सुधामयीं वृष्टिं, तस्योपरि व्यधादसौ । शशाम तत्क्षणादेव, तत्कृता तद्वपुर्व्यथा ॥ ८० ॥ ततः प्रणम्य राजर्षिं, सुरः सूरिं व्यजिज्ञपत् । संविभागव्रतस्थैर्यात्, किं फलं प्राप्सवानयम् ॥ ८१ ॥ स आख्यत्तीर्थकृत्कर्म, बबन्धे साधुनाऽमुना । ततः सोऽपि निजं धाम, जगाम नतिपूर्वकम् ॥ ८२ ॥ आराध्य तादृशं साधुसंविभागव्रतं पुनः । राजर्षिरपि देवोऽभूदच्युताख्ये त्रिविष्टपे ॥ ८३ ॥ ततश्च्युतो विदेहोर्वीभूषणं दूषणोज्झितः । भावी तीर्थंकरः श्रीमान्, नरवाहनभूपतिः ॥ ८४ ॥ श्रुत्वेति वृत्तं नरवाहनस्य, भूपस्य तीर्थंकरशर्मसारम् । भक्त्या मुनीनां श्रुतशीलभाजां, सृजन्तु भव्याः ! किल संविभागम् ॥ ८५ ॥

इति श्रीपञ्चदशमस्थानके पात्रदानोपरि नरवाहनकथानकं संपूर्णम् ॥



## ॥ अथ षोडशस्थानकव्याख्या विधीयते ॥

तत्रार्हदाचार्योपाध्यायसाधुबालवृद्धग्लानतपस्विचैत्यश्रमणसङ्घादिषु सम्यग्दर्शनपूतात्मना मुनिना सुश्रावकेण वा विशुद्धाशयपूर्वं वैयावृत्त्यं विधेय. यत *-वेयावच्चं निअयं, करेह उत्तमगुणे धारंताणं । सव्वं किर पडिवाई, वेयावच्चं अपडिवाई ॥ १ ॥ पडिभग्गस्स मयस्स य नासइ चरणं सुअं अगुणणाए । न हु वेयावच्चकयं, सुहोदयं नासए कम्मं ॥ २ ॥ वैयावृत्त्यं मनःशुद्ध्या,

* वैयावृत्त्य नित्यं कुरुतोत्तमगुणान्धारयताम् । सर्वं किल प्रतिपाति वैयावृत्यमप्रतिपाति । १ । प्रतिभग्नस्य मृतस्य च नश्यति चरणं श्रुतमगुणनया । नैव वैयावृत्यकृतं शुभोदय नश्यति कर्म । २ ।

विधेत यो जिनादिषु । शृणुतेऽसौ जिनेन्द्रस्य, श्रियं जीमूतकेतुवत्॥ ३ ॥ तथाहि—जम्बुद्वीपाभिधे द्वीपे, क्षेत्रे दक्षिणभारते । पुरं पुष्प-
पुरं नाम, धामासीदद्भुतश्रियाम् ॥ ४ ॥ जयकेतुः पतिः पृथ्व्याः, पृथुवत्प्रथितप्रभः । तताऽजनि प्रिया तस्य, जयमाला च विश्रुता
॥ ५ ॥ तदङ्गजो रजोऽतीतगुणाविराजितः । जीमूतकेतुनामाभूद् भूभारधरणे क्षमः ॥ ६ ॥ लावण्यपुण्यं यद्रूपं, दर्शं दर्शं मृगेक्षणाः
। निजेक्षणविनिर्माणं, मेनिरे सफलं न काः? ॥ ७ ॥ पितुः प्रसादतः प्राप्य, यौवराज्यं स यौवने । जगतीं रञ्जयामास, निर्मलैरपि
सद्गुणैः ॥ ८ ॥ अथ क्षितितलाख्याते, रत्नस्थलपुरेऽभवत् । सूरसेनः क्षमापालः, पद्मावत्सपद्मसम्पदाम् ॥ ९ ॥ यशोमती सुता तस्य,
विश्वैकरक्तकौमुदी । आसीन्निःसीमसौभाग्या, कलाभिरिव भारती ॥ १० ॥ जीमूतकेतुसौन्दर्यातिशयं विश्वविश्रुतं । उद्याने किन्नरैर्गीयमानमा-
नन्ददायिनम् ॥११॥ श्रुत्वा तत्करमहणसमीहापूरिताधिकम् । नृपाङ्गजा वरं नान्यं, वुवूर्षति कथञ्चन ॥१२॥ युग्मम्॥ तस्यास्तदाशयं ज्ञात्वा,
ततो मन्त्रिविचारतः । स्वयंवरे समाहूतो, जीमूतो भूभृतादरात् ॥ १३ ॥ स सेनया समागच्छन्, तत्पुरं प्रति भूपभूः । प्राप्तः सिद्धिपुरोपान्ते
मूर्छामासेदिवानथ ॥ १४ ॥ मन्त्रौषधादिभिर्मन्त्रिप्रमुखैर्मुख्यपूरुषैः । उपचाराः कृतास्तस्य, भूयांसोऽपि स्वशक्तितः ॥ १५ ॥
कुपात्रे दानवत्सर्वे, तेऽभूवन्निष्फलाः परम् । सम्यग्ज्ञानं विना यस्मान्न क्रिया फलदायिनी ॥ १६ ॥ तदाऽकलंकदेवाख्यः, सूरि-
र्भूरिगुणोदधिः । तेषां पुण्योदयादागात्तत्र श्रीश्रुतकेवली ॥ १७ ॥ तस्यानुभावतो मूर्छापगमादुत्थितः क्षणात् ॥
तत्राऽऽगाद्य नमस्कर्तुं, राजसूनुः प्रमोदतः ॥ १८ ॥ तस्य प्रबोधमाधातुं, गुरुणा करुणाब्धिना । विदधे देशना सम्यक्तत्त्वमार्ग-
प्रकाशिनी ॥ १९ ॥

कषायविषयैरग्रैः रौद्रार्त्तध्यानहेतुभिः । भ्रमन्ति प्राणिनः प्रायो, विवशाः सर्वयोनिषु ॥ २० ॥ यतः-× न सा जाइ न सा जोणी, न तं ठाणं न तं कुलं । न जाया न मुया जत्थ, सव्वे जीवा अणंतसो ॥ २१ ॥ तथा-पापी रूपविवर्जितो गतकृपो यो नारकादागतस्तिर्यग्योनिसमागतश्च कपटी नित्यं बुभुक्षातुरः । मानी ज्ञानविवेकबुद्धिकलितो यो मर्त्यलोकागतो, यस्तु स्वर्गसमागतः स सुभगः प्राज्ञः कविः श्रीयुतः ॥२२॥ रौद्रध्यानमयः कषायविषयासक्तः सदा मत्सरी, बह्वारम्भपरिग्रहाकुलमनिः पञ्चाक्षहिंसारतः । मांसाशी नरकं व्रजेत्किल पुमान् कूटप्रयोगोद्यतो, मायावी कटुवाग्गतारमविरतिस्तिर्यग्गतिं गच्छति ॥ २३ ॥ निर्दम्भः सदयो दानी, सदाचारपरायणः । सद्भूतभाषी सर्वत्र, नृगतिं जन्तुराप्नुयात् ॥ २४ ॥ सुपात्रदानी मधुरैकभाषी, सद्देवपूजारुचिमान् विनीतः । सम्यक्क्रियो बोधकृताभियोगः, स्वर्गश्रिया क्रीडति सर्वदाऽङ्गी ॥ २५ ॥

इत्यादिदेशनाप्रान्ते, गुरुं विज्ञपयामिति अचिकित्स्या कुतो मूर्छा, ममाऽभूत्कर्मणो विभो ! ॥२६॥ तत्स्वरूपमुवाचैवं, गुरुर्गुरुगुणाकरः । अभूद् धातकीखण्डे सारसाकेतपत्तने ॥२७॥ अगर्वसर्वतुङ्गात्मा, दुर्वासाः कोपनो मुनिः । प्रमादी यतिचर्यायां, गारवत्रयमन्थरः ॥२८॥ युग्मम् ॥ अन्यदा गुरुभिः सार्कं, सानेत पत्तनं प्रति । स व्रजन् विषमे मार्गे, तृषाक्रान्तेषु साधुषु ॥ २९ ॥ आदिष्टो विधिनासन्ने, ग्रामे गत्वा समानय । पानीयं त्वं मुने ! बालग्लानादिमुनिहेतवे ॥ ३० ॥ स्वगुरोरुपरि क्षोभं, तदाकर्ण्य दधद् हृदि । वचास्युच्चावचान्याह, यतीनां स पदे पदे ॥ ३१ ॥ मृद्वीकामृदुभिर्वाक्यैः, स्थविरैर्वारितोऽपि सः । न शशाम मनाग्नैव, विदधे च गुरूदितम् ॥३२॥ सद्गुणश्रेणिमाणिक्य पूरिते गुणसागरे । भवन्त्येवंविधाः केचित्कर्करा इव कर्कशाः ॥ ३३ ॥ ततो गच्छोपरि द्वेषं, बिभ्राणः क्रूरमानसः । निर्गत्य स गणात्तस्माद्वने

× न सा जातिर्न सा योनिर्न तत्स्थानं न तत्कुलम् । न जाता न मृता यत्र सर्वे जीवा अनन्तशः ॥ २१ ॥

बथापि दुःखीभूतः ॥ ३४ ॥ सप्तम्यां नरकावन्यां, नारकोऽभूग्महार्तिभृत् । त्रयस्त्रिंशत्सागरायुः, साधुद्वेषकुकर्मणा ॥ ३५ ॥ युग्मम् ॥ ततो भूयो भवान् भ्राम्यं, भ्रामं दुःखभरार्दितः । तत्कर्मोपशमादेष, ग्रामे कौटुम्बिकोऽजनि ॥ ३६ ॥ श्रीनिदानं तदा दानं, दत्त्वा मासोपवासिने । तत्प्रभावाद्भवानासीत्तेजस्वी राजसूः सुखी ॥ ३७ ॥ न्यायवृत्त्या श्रिय प्राप्ताः, सुपात्रे च नियोजिताः । पुण्यानुबन्धिपुण्यत्वाज्जायते शर्महेतवः ॥ ३८ ॥ अधुना शेषमात्रेण, गुरुविद्वेषकर्मणा । मूर्छया तेऽभवद्देहे, व्यथोदयमुपेयुषा ॥ ३९ ॥ तत्कर्म साम्प्रतं क्षीणं, निःशेषं मुनिवन्दनात् । ततस्त्वं दिनमानेण, नीरग् भावी शुभोदयात् ॥ ४० ॥ निशम्येति गिरं तस्य, प्रबुद्धो नृपसूस्ततः । सस्मार प्राक्तनीं जातिं, बभूव च निरामयः ॥ ४१ ॥ मन्त्रौषधाद्यसाध्यानां, व्याधीनां प्राणिनामिह । तद्धेतौ कर्मणि प्रायः, क्षीण एव क्षयो भवेत् ॥ ४२ ॥ अर्हद्भक्तिदयादानतपोभिर्विधिनिर्मितैः । कुकर्म क्षीयते जन्तोः, सद्गुरोर्वचनेन च ॥ ४३ ॥ जीमूतकेतुरुर्वीशसूनुः संवेगमागतः । ततो लोचं विनिर्माय, पञ्चभिर्मुष्टिभिः स्वयम् ॥ ४४ ॥ सन्निधौ सद्गुरोस्तस्य, तपस्या शिश्रियेऽनघाम् । संसारसागरोत्तारे, तरणीव गुणान्विताम् ॥ ४५ ॥ युग्मम् ॥ संयमश्रीपतिं श्रुत्वा, कुमारं तं मनोधृतम् । यशोमत्यपि चारित्रं, सती राजसुता ललौ ॥ ४६ ॥ अधीत्यैकादशाङ्गानि, राजर्षिर्योगवांस्ततः । पदानुसारिणी प्रज्ञा, बिभ्रद्विनयतत्परः ॥ ४७ ॥ अश्रौषीदन्यदा पूर्वाण्यधीयानः समाधिमान् । विंशतिस्थानकतपःफलमेवं गुरोर्गिरा ॥४८॥ युग्मम् ॥ पदेषु बहुमानेन, जिनेन्द्रादिषु विंशतौ । सद्दर्शनस्थिरस्वान्तो, लभते तीर्थकृत्पदम् ॥ ४९ ॥ गुरूपाध्यायशिष्येषु, बालवृद्धतपस्विषु । सङ्घग्लानकुलगणेष्वादरेण दशस्वपि ॥ ५० ॥ भक्तपानौषधवस्त्रासनविश्रामणादिभिः । वैयावृत्त्यं सृजंस्तत्र, विशुद्ध्या षोडशे पदे ॥ ५१ ॥ जिनेन्द्रपदवीं प्रौढां, लभते विश्वतोऽद्भुताम् । सुरासुरनरेन्द्राणां, श्रियो यत्रादर्पासराः ॥ ५२ ॥ विधेयं दशधा वैयावृत्त्यं नित्यं मयेति सः । ततोऽर्हद्भक्तिपूतात्मा, घोराभिग्रहमग्रहीत् ॥ ५३ ॥ वैयावृत्त्यं

त्रिधा शुद्धं, राजर्षेस्तन्वत सत । बालग्लानादिसाधूना, गुरूणा च विशेषतः ॥५४॥ प्रशंसा त्रिदशस्वामिनिर्मिता देवसंसदि । श्रुत्वा सोमाह्वयो लोकपाल उत्तालमानसः ॥५५॥ तस्य व्रतचित्तस्य, वैयावृत्त्ये दिवानिशम् । परीक्षां सुयमागत्य, निर्ममे निर्ममेशितुः ॥५६॥ त्रिभिर्विशेषकाः वमतौ निर्मितो ग्लानसाधुरेकः स्वमायया । अतीव कृशतां प्राप्तो, दाघज्वरज्वलद्वपु ॥५७॥ द्वितीयस्तु मुनेस्तस्य, गोचर प्रमुपेयुष । विलोकनार्थं लोकोक्तिनिपुणो विकृत कृतिः ॥५८॥ भानुश्रेष्ठिगृहे प्र स, निरीह मुनिकण्डनम् । गुरुवाक्येभ्यसद्भोज्यप्राप्तये तं विलोक्य सः ॥५९॥ राजर्षि तीक्ष्णवचसा, तुतोदाऽदयमानस । न चुकोप परं क्वापि, स पुन शमसागर ॥६०॥ उपाश्रयं ततः प्राप्य, तद्विगा शीघ्रमेव सः ॥ वैयावृत्त्यं व्यधात्तस्य, त्रिशुद्ध्या श्रीगुरोर्गिरा ॥६१॥ तदा ग्लानमुनेर्वैद्यै, सहस्रारफलद्रवः । ज्वरोपशान्तये प्रोचे, मारिचाज्यादिभिर्मितः ॥६२॥ गुर्वादेशने राजर्षिस्तदानयनहेतवे । बभ्राम नगरे तत्र, श्रेष्ठिमन्त्रिगृहादिषु ॥६३॥ नाऽसौ प्राप्तः परं क्वापि, देवदम्भानुभावतः । मुनिना विधिना तेनाऽऽलोक्यमानोऽपि सर्वत ॥६४॥ ततो ग्लानमुनि. कोपटोपताम्रमुखद्युति. । राजर्षि तर्जयामास, दुर्वाक्यैरतिदुस्सहैः ॥६५॥ सोऽपि शान्तमनास्तस्य, प्रणम्याऽङ्घ्रिद्वय मुदा । अकार्षीत्तस्य त्वनां मामकर्णामिरमृतश्रवैः ॥६६॥ सोमोऽथ तन्मनोभाव, ज्ञात्वैकान्तहितावहम् । प्रत्यक्षीभूय तुष्टात्मा, तं तुष्टाव कृताञ्जलिः ॥६७॥ त्वमेव भुवि राजर्षे !, ग्रामणीरनगारिणाम् । विधत्ते स्वर्गिणा स्वामी, यस्य ते सद्गुणस्तुतिम् ॥६८॥ सा पुनः प्रत्ययता नीता, भवता तन्वता स्वयम् । मायामयमुनेरस्य, वैयावृत्त्यं गतस्पृहम् ॥६९॥ शतशोऽधीतिनः सन्ति, सन्त्यनेके तपस्विनः । न कोऽपि तादृशो ग्लानवैयावृत्त्यकरः परम् ॥७०॥ ग्लानानां प्रतिजागर्त्ता, भक्तपानौषधादिभिः । ममासौ प्रतिजागर्तेत्यूचे तीर्थकृता स्वयम् ॥७१॥ देवमायां ततोऽशेषां, परित्यज्य स्यादयम् । प्रणिपत्य क्षमित्वा च, लोकपालो दिवं ययौ ॥७२॥ दशस्वपि पदेष्वेवं वैयावृत्त्यं सृजन् सदा । राजर्षिरर्जयामास, तीर्थकृत्कर्म निर्मलम् ॥७३॥ आराध्य संयमं सम्यग्, वैयावृत्त्यैकतत्परः । स मुनिः क्रमतो जज्ञे,

वैजयन्ते सुरामणीः ॥ ७४ ॥ ततो जीमूतराजर्षिश्च्युत्वा तस्मात्सुरालयात् । श्रीकच्छविजये भावी, जगत्पूज्यो जिनेश्वरः ॥ ७५ ॥ निरतीचार-चारित्रा, यशोमत्यपि संयती । तत्रैवाऽऽसाद्य देवत्वं, तद्गणभृद्भविष्यति ॥७६॥ जीमूतकेतुपृथिवीपालवृत्तमेतत्, श्रुत्वा जिनेन्द्रपदकर्मनिबन्ध-सारम् । यत्नं सृजन्तु विधिना मुनिवर्गवैयावृत्त्ये जगद्गुरुगरिष्ठसुखस्पृहा चेत् ॥ ७७ ॥

॥ इति वैयावृत्त्यकरणोपरि नृपश्रीजीमूतकेतुकथा षोडशस्थानके समाप्ता ॥

## अथ सप्तदशस्थानकस्वरूपं.

तत्र सकलगुणरत्नाकरस्य त्रिभुवनजनमहनीयस्य चतुर्विधविशुद्धधर्माधाररूपस्य श्रीश्रमणसङ्घस्य निर्भरभक्तिभरगर्भसमाधिर्विवेकिना विधेयः, यतः—यः संसारनिरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते, यं तीर्थं कथयन्ति पावनतया येनाऽस्ति नान्यः समः। यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते, स्फूर्तिर्यस्य परा वसन्ति च गुणा यस्मिन् स सङ्घोऽर्च्यताम् ॥१॥ नार्हतः परमो देवो, न मुक्तेः परमं पदम् । श्रीसङ्घात्परं क्षेत्रं, नास्ति नास्ति जगत्त्रये ॥ २ ॥ समाधिस्तु द्रव्यभावाभ्यां द्विविधः, यतः—*मणवंछियवत्थूणं, दाणेणं दीणदुहियजीवाणं। जं किज्जइ संतोसो, दव्वसमाही हवइ एसो ॥ ३ ॥ सारणवारणचोअणदाणेण संठवेइ विहिपुव्वं । जं नाणाइगुणेसु, भावसमाही हवइ एसो ॥ ४ ॥ तपः कुर्वन्ति दुःसाध्यं, नीचा अपि यथा तथा । परं समाधिमाधातुं, गरीयांसो भवन्त्यलम् ॥ ५ ॥ इति । यः समाधिं द्विधा सङ्घे, विधत्ते विश्वपूजिते । स तीर्थकृत्पदं पुण्यं, पुरन्दर इवाऽऽश्रयेत् ॥ ६ ॥ तद्यथा—वाराणस्यां पुरि प्रौढविजयश्रीविराजितः । राजा

* मनोवाञ्छितवस्तूनां दानेन दीनदुःखितजीवानाम् यः क्रियते संतोषो द्रव्यसमाधिर्भवत्येषः । ३ । स्मारणवारणचोदनादानेन संस्थापयति विधिपूर्वम् । यत् ज्ञानादिगुणेषु भावसमाधिर्भवत्येषः । ४ ।

विजयसेनोऽभूद्भूयसां महसां पदम् ॥ ७ ॥ तस्याऽग्रमहिषी पद्मा, राद्भुतसौरभा । सद्म निश्छद्मधर्मस्य, पद्ममालाभिधाऽभवत्॥ ८ ॥ पुन्दरस्तयोः पुत्रः, पवित्रः सुमनोऽग्रणीः । आसीत गोत्रभित्तापि, दानवारिव विश्रुतः ॥ ९ ॥ क्रमेण प्रतिभाशाली, सोऽधीत्य सकलाः कलाः । कामिनीहृदयोन्मादजननं यौवनं ययौ ॥ १० ॥ सोऽन्यदा सन्निधौ जैनमुनीनां वनवासिनाम् । अश्रौषीद्देशनामेवं, सम्यग्धर्म-सुधाश्रवाम् ॥ ११ ॥ इह्णमेव धम्मबीयं, इणमेव धम्मकणयकसवट्टो । इणमेव दुक्करं जं, कीरइ परदारविरइवयं ॥ १२ ॥ धन्ना ते चिय पुरिसा, रूवं दट्ठूण परकलत्ताणं । धाराहयव्व वसहा, वच्चंति महीं पलोअंता ॥ १३ ॥ यस्तु स्वदारसन्तोषी, परस्त्रीषु विरक्तिमान् । गृहस्थोऽपि स्वशीलेन, यतिकल्पः स उच्यते ॥ १४ ॥ श्रुत्वेति नृपतेः सूनुरनूनसुकृतोन्नतिः । परदारपरित्यागव्रतं जग्राह निश्चलम् ॥ १५ ॥ मुनयस्तं पुनः प्राहुर्वत्स ! सद्दर्शनान्वितम् । शीलव्रतमिदं प्रायो, वस्तुतः फलदायकम् ॥ १६ ॥ सद्दर्शनं भवेन्मूलं, यतो धर्म-महीरुहः । तत्त्वश्रद्धानरूपं तन्निसर्गाधिगमोद्भवम् ॥ १७ ॥ देवे गुरौ धर्मविधौ विशुद्धे, शङ्कादिदोषाकलुषीकृतस्य । सम्पद्यते या रुचिर-न्तरङ्गा, सम्यक्त्वमेतन्मुनयो वदन्ति ॥ १८ ॥ यथा यथा जिनेन्द्रेषु, भक्तिः स्यान्निर्निभाशया । सम्यग्दर्शनसंशुद्धिर्जायते च तथा तथा ॥ १९ ॥ यतः-जिनेषु कुशलं चित्तं, तन्नमस्कार एव च । तत्प्रणमादि संशुद्धं, धर्मबीजमनुत्तरम् ॥ २० ॥ अङ्गीकृत्य ततो राजसूनुः

---

१ तेजसाम् २ सुमनसो देवाः पण्डिताश्च ३ गोत्रभेदकः ४ दाननिषेधकः असुरिपुश्च ।

* इदमेव धर्मबीजमिदमेव धर्मकनककषपट्टः इदमेव दुष्करं यत्क्रियते परदारविरतिव्रतम् ॥ १२ ॥ धन्यास्त एव पुरुषा रूपं दृष्ट्वा परकलत्राणाम् । धाराहता इव वृषभा व्रजन्ति महीं प्रलोकयन्तः ॥ १३ ॥

५ असाधारणशुभाध्यवसायवर्ती

सुप्यरत्नमुत्तमम् । चितारत्नमिवानर्घं, मुदितो गृहमासदत् ॥ २१ ॥

परदारपरीहारव्रत सद्दर्शनान्वितम् । तस्य पालयतः शश्वत्त्रिविधत्रिविधात्मना ॥ २२ ॥ अन्येद्युरपरा माता, मालती भुवनाद्भुतम् । निरूप्य रूपसौन्दर्य, सरागहृदयाऽजनि ॥ २३ ॥ यथा यथाऽभवत्तस्या, कलभाजोऽस्य दर्शनम् । भूयस्तथा तथा मेने, वृद्धिं हृद्रागसागर ॥ २४ ॥ साऽ यदा तद्व्यथारोगजातसन्तापपीडिता । अशोकवनिकामध्य, सौवर्णकदलीगृहे ॥ २५ ॥ सगौरव तमाहूय, स्वनाम्ना पण्डिताख्यया । उवाच स्मितोल्लास, सेष्मन्थरया गिरा ॥ २६ ॥ कुमार वीरकोटीर !, कदलीदलशीतल । मारापस्मारसन्तापतप्तस मे भृश वपु ॥ २७ ॥ निर्वापय कृपाधार, पुण्यलावण्यसागर । मनोरथशतप्राप्यसयोगसौख्यसगमात् ॥ २८ ॥ युगमम् ॥ चन्द्रमाश्चन्दन चिन्तामणिश्च सुजन पुमान् । भूतार्थिशान्तये जाता, यथा विश्वे भवास्तथा ॥ २९ ॥ इत्याकर्ण्य गिर मातुर्नृपसू पापमन पदम् । सुधाद्रवमुचा वाचा सज्जनस्तामबोधयत् ॥ ३० ॥ परासिया रतिर्मातर्नरद्वारकुञ्चिका । सर्वाधर्मतरोर्मूल, निषिद्ध तत्त्ववेदिभि ॥ ३१ ॥ परस्त्रीसगमोद्भूतपापपुञ्जकलङ्कित । इहाऽपि लघुता याति, श्वभ्र त्वागामिजन्मनि ॥ ३२ ॥ अनन्यजन्यसौजन्य जननी जननी पुन । भस्मसात्कुरुते वज्रज्वालावत्सौवसगमात् ॥ ३३ ॥ गुरोर्जाया पितुर्जाया, भातृजाया स्नुषा सुताम् । नरकातिथयो नून, कामयन्त नराधमा ॥ ३४ ॥ इत्याकूत निवेद्याशु, तस्या नत्वा पदाम्बुजम् । स जगाम निज स्थान, साऽपि तस्मिन् रुष दधौ ॥ ३५ ॥ तद्वचोभि ततो राज्ञे, किञ्चिदुक्त्वा दुराशया । सा तदा प्रेषयामास, विदेश त शुभाशयम् ॥ ३६ ॥ खड्गपाणिर्व्रजन्नेष, रहैकेन द्विजन्मना । पल्लाश पथि निर्जित्य, दुर्जय दुर्नयोदधिम् ॥ ३७ ॥ पापनन्दिपुरोद्याने, सर्वर्तुतरुधारिणि । ऋषभस्वामिनश्चैत्ये चञ्चत्काञ्चननिर्मिते ॥ ३८ ॥ युगमम् ॥ स्नात्वा वापिजले तत्र, पवित्रस्मेरपङ्कजै । जिनेन्द्र पूजयामास, निवास राजसू श्रिय ॥ ३९ ॥ यत —

१ चन्द्रस्य कलानुकरा च २ स्तनीयमगागमा ३ अभिप्रायकम ४ निम्द्रम

राज्यश्रियः सारं, केनापि व्योमचारिणा ॥५९॥ युग्मम् । रूपयौवनसौभाग्यशालिनी ललनामिह । कस्कौ नेत्रातिथीकृत्य, कृत्याकृत्यं विचारयत् ॥६०॥ तां भटा नृपतेः पुत्रीं, मल्लाहर्तुं समुत्सुकाः । परस्परकृतोत्साहाः, कुर्वन्ति तुमुलं भृशम् ॥६१॥ इत्युदीर्य तदादेशान्नृपधाम जगाम सः । तं व्याजहार राजापि, सुतेयं कथमेष्यति ? ॥६२॥ सोऽपि विज्ञापयामास, प्रणतो भूमिवासवम् । आनयिष्यति राजेन्द्र ! कन्यामेतां सुहृन्मम ॥६३॥ आहूय बहुमानेन, तमुर्वीपतिनन्दनम् । उर्वीपतिरुवाचैवं, वाचा प्रतिसुधामुचा ॥६४॥ कन्यां धन्यामिमां वीर ! यद्यानयसि सन्मते ! । तदौचित्यपरे देया, तदेषा सुसमाधनम् ॥६५॥ राजन् ! सप्तदिनं मध्ये, मयाऽऽनेया तवाङ्गजा । इत्युक्त्वा नृपतेरग्रे, सप्रतिज्ञमसौ ययौ ॥६६॥ विमानं निर्मितं विश्वस्वामिन्याथ प्रमजया । विधायाऽऽरुह्य तत्कन्यास्थानं मापज्जवेन सः ॥६७॥ वैताढ्यपर्वते गन्धसमृद्धे नगरे ततः । मणिचूडाभिधानेन, खेचरेण दुरात्मना ॥६८॥ द्वीपे नन्दीश्वरे यात्रां, विधायाऽऽगच्छता सता । तदद्भुतवपूरूपसौभाग्याकृष्टचेतसा ॥६९॥ हृता बन्धुमती राजसुतामानीय तत्क्षणात् । चकार स्फारमानन्दं, नृपादीनां नृपात्मजः ॥७०॥ युग्मम् ॥ उपयेमे ततो राजसुतां तां नृपशासनात् । पुरन्दरः स्फुरद्भाग्यकीर्ता कान्तिमिवाद्भुताम् ॥७१॥ सप्तभौमे ततः सौधे, स तिष्ठन् भ्रभुजार्पिते । सर्वाङ्गसुखसामग्रीसमग्रे प्रियया समम् ॥७२॥ भुञ्जानः पञ्चधा भोगानभङ्गसुकृताशयः । लोकानां पूरयामास, प्रीतिदानैर्मनोरथान् ॥७३॥ बभूव मणिचूडोऽपि, नभोगामिनृपाग्रणीः । सुखावहः सखा तस्य, प्राचीनसुकृतोदयात् ॥७४॥ पुरन्दरः स्फुरद्भाग्यभासुरः स्वपराक्रमात् । क्रमाद्विद्याधरश्रेणौ, विश्वतोऽजनि विश्रुतः ॥७५॥ नन्दीश्वरादितीर्थेषु, मणिचूडान्वितः सुधीः । शाश्वतीः प्रतिमा नत्वा, स जन्म सफलं व्यधात् ॥७६॥ अन्यदा समवासार्षीत्, सूरिर्भूरिगुणोदधिः । अवधिज्ञानवाँस्तत्र, पुरे श्रीमलयप्रभः ॥७७॥ ववन्दे तं नृपस्तत्राऽऽगत्य सत्कृत्यतत्परः ।

१ कठोरम् २ प्रतिगम्यः ३ कोलाहलम्

पुरन्दरकुमारेण, सम साम्प्रतमुत्सवम् ॥ ७८ ॥ आचार्यां स क्षमास्वामी, धर्मं शर्मप्रदं तदा । आसीनः कनकाम्भोजे, व चा माधुर्यधुर्यया ॥ ७९ ॥ युग्मम् । विषवृक्षोपमं पापं, मुक्त्वा हिंसादिसम्भवम् । सुधोपमं शुभा । धर्मं, सेवध्वं शिवशर्मदम् ॥ ८० ॥ सम्यग्धर्मविमुक्तस्य, क्रूरकर्मक-कारिणः । नृजन्म गदितं जन्तोर्विषवृक्षोपमं बुधैः ॥ ८१ ॥यत - अवकेशीतरु. केषां, केषाञ्चिद्विषपादपः । किम्पाकतरुरन्येषां, परेषां कल्प पादपः ॥ ८२ ॥ नृभवः पुण्यलभ्योऽयं, भवकोट्याऽपि दुर्लभ. । तत्तत्कर्मानुसारेण, प्रणीतः प्राणिनां किल ॥ ८३ ॥ युग्मम् । सुकृतं न कृतं किञ्चिद्यैः प्रमादपरायणैः । तेषां त्रिवर्गशून्यानामवकेशि.रूपमाः ॥ ८४ ॥ तमोमयैः पुनर्बद्धं, पापं पापानुबन्धि यै. । तच्चेषां शौनिकादीनां, विषतरुरिव दुःखदम् । ॥ ८५ ॥ मिथ्यात्ववशगैश्चके, पुण्यं पापानुबन्धि यैः । तच्चेषां म्लेच्छपादीनां, किम्पाकफलसन्निभम् ॥ ८६ ॥ पुण्यानुबन्धधर्मांणि, सुकृतानि कृतानि यैः । तेषां मनुष्यजन्मेदं, भवेत्कल्पतरूपमम् ॥ ८७॥ कृपा सर्वेषु जीवेषु, विधिवज्जिनपूजनम् । विशुद्धा न्यायवृत्तिश्च, पुण्यं पुण्यानुबन्धि तत् ॥ ८८ ॥ समता सर्वभूतेषु, दानं पात्रेषु भक्तितः । सम्यग्ज्ञानक्रियायोगः । पुण्यं पुण्यानुबन्धि तत् ॥ ८९ ॥ परोपतापविरतिः , षडावश्यकपालनम् । शुक्ललेश्या शुभध्यानं, पुण्यं पुण्यानुबन्धि तत ॥९०॥ अज्ञानिपरि-तापेन, निर्विवेकतया पुनः । क्रियते सनिदानैर्यत्पुण्यं पापानुबन्धि तत॥९१॥अविराहियजिणधम्मा, निरवयं निरुवामं च गयासाय। भरहव्व लहंति जओ पुन्नं पुन्नाणुबंधि तयं ॥९२ ॥ नीरोगाइगुणजुआ महरिद्धिया कोणियव्व पावरया । पावाणुबंधिपुन्ना, हवंति अन्नाणकट्ठेण ॥ ९३ ॥ जं पुण्णं पावरसुदया, दरिद्दिणो दुक्खिआवि पावंति । जिणधम्मं तं पुन्नाणुबंधिपावं दयाइव्वा ॥ ९४ ॥ पावा पयंडकम्मा निद्धम्मा निग्घिणा निरणुतावा । दुहिया य पावनिरया, पावं पावाणुबंधि तयं ॥ ९५ ॥ इति । स धर्मः स्याद् द्विधा सम्यक्, साधुश्रावक-भेदतः । तस्याद्यभिर्गुणैः शुद्धं, मूलं सम्यक्त्वमीरितम् ॥९६ ॥ यावत्सम्यक्त्वनैर्मल्यं, तावद्धर्मफलं शुभम् । वातानुकूल्यतः शस्यसमृद्धिः

कृपिकर्मणि ॥ ९७ ॥ इत्यादिदेशनां श्रुत्वा, गुरोस्तस्य प्रजागुरुः। तदा सम्यक्त्वसंयुक्तां, प्रपेदे द्वादशव्रतीम् ॥ ९८ ॥ त्रिर्जिनेंद्रार्चनापूतं, श्राद्धधर्मसुरद्रुमम् । आरोपयत्कुमारोऽपि, निजे हृदि गुरोर्गिरा ॥ ९९ ॥

ततो गुरून्नमस्कृत्य, राजाऽगान्निजमंदिरम् । पुरंदरकुमारेण, समं सद्धर्मवासितः ॥ १०० ॥ समुद्रदत्तनामागादन्यदा नगरात्ततः । श्रेष्ठी वाराणसीपुर्यां, वाणिज्यायाऽऽर्हताग्रणीः ॥ १ ॥एकदा श्रेष्ठिना तेन, नृपस्याग्रे सविस्मयम् । पुरंदरकुमारस्य, वृत्तांतो निखिलोऽकथि ॥ २ ॥ ततो विजयसेनोर्वीपतिः प्रणयपूरितः । जनं लेखसखं प्रैषीत्, पुत्रानयनहेतवे ॥ ३ ॥ कुमारोऽपि पितुर्ज्ञात्वा, लेखार्थं प्रेमपूरितम् । शूरोर्वीपतिमापृच्छ्य, स्वस्थात्मा दयितासखः ॥ ४ ॥ त्रैलोक्यस्वामिनीविद्याप्रभावात्खेचरैर्वृतः । दिव्यं विमानमारुह्य, नमस्यंस्तीर्थसंततिम् ॥ ५ ॥ वाराणसीपुरं प्राप्य, पितुः पादौ नमोऽकरोत् । कुलीना ऋद्धिमंतोऽपि, न त्यजंति विनीतताम् ॥ ६ ॥ त्रिभिर्विशेषकम्। यतः—[1]'साली भरेण तोएण जलहरा फलभरेण तरुसिहरा । विणयेण य सप्पुरिसा नमंति न हु कस्सवि भयेण ॥ ७ ॥ निवेश्य स्वपदे राजा, तं क्रमान्निर्मितोत्सवम् । मलयप्रभसूरीणां, पार्श्वे शिश्राय संयमम् ॥ ८ ॥ अथ विद्यानुभावेन, पुरंदरनरेश्वरः। राजाधिराजपदवीमाससाद महोदयाम् ॥ ९ ॥ प्रतिग्रामं प्रतिपुरं, स पृथिवीममंडयत् ।प्रासादैः पूरिताह्लादैर्जिनेंद्रप्रतिमाङ्कितैः ॥ १० ॥ श्रीसंघानववात्सल्यं, प्रत्यहं स नृपो व्यधात् । परोपकारैः सर्वेषां, समाधिं च पदे पदे ॥ ११ ॥ आगच्छंतीं क्रमाद्वीक्ष्य, जरां तेजोऽपहारिणीम् । पुरंदरनराधीशः, संवेगरसपूरितः ॥ १२ ॥ ,



---

१ शाली भरेण तोयेन जलधराः फलभरेण तरुशिखराणि । विनयेन च सत्पुरुषा, नमन्ति नैव कस्यापि भयेन ॥ ७ ॥

पुरन्दरकुमारेण, समं साम्दसुधसरम् ॥ ७८ ॥ आचरया स क्षमास्वामी, धर्मं शर्मप्रदं तदा । आसीनः कनकाम्भोजे, वचा साधुधुर्यया ॥ ७९ ॥ युग्मम् । विषवृक्षोपमं पापं, मुक्त्वा हिंसादिसम्भवम् । सुधोपमं सुधा ! धर्मं, सेवध्वं शिवशर्मदम् ॥ ८० ॥ सम्यग्धर्मविमुक्तस्य, क्रूरकर्मकराणिः । नृजन्म गदितं जन्तोर्विषवृक्षोपमं बुधैः ॥ ८१ ॥ यत - अवकेशीतरु: केषां, केषाञ्चिद्विषपादपः । किम्पाकतरवन्येषां, परेषां कल्पपादपः ॥ ८२ ॥ नृभवः पुण्यलभ्योऽयं, भवकोट्याऽपि दुर्लभः । तत्तत्कर्मानुसारेण, प्रणीतः प्राणिनां किल ॥ ८३ ॥ युग्मम् । सुकृतं न कृतं किञ्चिदैः प्रमादपरायणैः । तेषां त्रिवर्गशून्यानामवकेशि नृजन्मः ॥ ८४ ॥ तमोमयैः पुनर्बद्धं, पापं पापानुबन्धि यैः । तत्तेषां शौनिकादीनां, विषतरुरिव नृजन्म ॥ ८५ ॥ मिथ्यात्ववशगैश्चके, पुण्यं पापानुबन्धि यैः । तत्तेषां म्लेच्छपादीनां, किम्पाकतरुसन्निभम् ॥ ८६ ॥ पुण्यानुबन्धिकर्माणि, सुकृतानि कृतानि यैः । तेषां मनुष्यजन्मेदं, भवेत्कल्पतरूपमम् ॥ ८७ ॥ कृपा सर्वेषु जीवेषु, विधिवज्जिनपूजनम् । विशुद्धा न्यायवृत्तिश्च, पुण्यं पुण्यानुबन्धि तत् ॥ ८८ ॥ समता सर्वभूतेषु, दानं पात्रेषु भक्तितः । सम्यग्ज्ञानक्रियायोगः । पुण्यं पुण्यानुबन्धि तत् ॥ ८९ ॥ परोपतापविरतिः, षडावश्यकपालनम् । शुक्ललेश्या शुभध्यानं, पुण्यं पुण्यानुबन्धि तत् ॥ ९० ॥ अज्ञानाग्निपरितापेन, निर्विवेकतया पुनः । क्रियते सनिदानैर्यत्पुण्यं पापानुबन्धि तत् ॥ ९१ ॥ अविराहियजिणधम्मा, निरवयं निरुवमं च गयासाय । भरहुव्व लहंति जओ पुन्न पुन्नाणुबंधि तयं ॥ ९२ ॥ नीरोगाइगुणजुआ महड्ढिया कोणियव्व पावरया । पावाणुबंधिपुन्ना, हवंति अन्नाणकट्ठेण ॥ ९३ ॥ जं पुण पावस्सुदया, दरिद्दिणो दुक्खिआवि पावंति । जिणधम्मं तं पुन्नाणुबंधिपावं दयाइ्ढगा ॥ ९४ ॥ पावा पयडकम्मा निद्धम्मा निग्घिणा निरणुतावा । दुहिआ य पावनिरया, पावं पावाणुबंधि तयं ॥ ९५ ॥ इति । स धर्मः स्याद् द्विधा सम्यक्, साधुश्रावकभेदतः । तद्द्वयाद्यभिर्गुणैः शुद्धं, मूलं सम्यक्त्वमीरितम् ॥ ९६ ॥ यावत्सम्यक्त्वनैर्मल्यं, तावद्धर्मफलं शुभम् । वातानुकूल्यतः शस्यसमृद्धिः

कृपिकर्मणि ॥ ९७ ॥ इत्यादिदेशनां श्रुत्वा, गुरोस्तस्य प्रजागुरुः। तदा सम्यक्त्वसंयुक्तां, प्रपेदे द्वादशव्रतीम् ॥ ९८ ॥ त्रिर्जिनेंद्रार्चनापूतं, श्राद्धधर्मसुरद्रुमम् । आरोपयत्कुमारोऽपि, निजे हृदि गुरोर्गिरा ॥ ९९ ॥

ततो गुरून्नमस्कृत्य, राजाऽगान्निजमंदिरम् । पुरंदरकुमारेण, समं सद्धर्मवासितः ॥ १०० ॥ समुद्रदत्तनामागादन्यदा नगरात्ततः । श्रेष्ठी वाराणसीपुर्यां, वाणिज्यायाऽऽर्हताग्रणीः ॥ १ ॥एकदा श्रेष्ठिना तेन, नृपस्याग्रे सविस्मयम् । पुरंदरकुमारस्य, वृत्तांतो निखिलोऽकथि ॥ २ ॥ ततो विजयसेनोर्वीपतिः प्रणयपूरितः । जनं लेखसखं प्रैषीत्, पुत्रानयनहेतवे ॥ ३ ॥ कुमारोऽपि पितुर्ज्ञात्वा, लेखार्थं प्रेमपूरितम् । शूरोर्वीपतिमापृच्छ्य, स्वस्थात्मा दयितासखः ॥ ४ ॥ त्रैलोक्यस्वामिनीविद्याप्रभावात्खेचरैर्वृतः । दिव्यं विमानमारुह्य, नमस्यंस्तीर्थसंततिम् ॥ ५ ॥ वाराणसीपुरं प्राप्य, पितुः पादौ नमोऽकरोत् । कुलीना ऋद्धिमंतोऽपि, न त्यजंति विनीतताम् ॥ ६ ॥ त्रिभिर्विशेषकम्। यतः—[1]साली भरेण तोएण जलहरा फलभरेण तरुसिहरा । विणयेण य सप्पुरिसा नमंति न हु कस्सवि भयेण ॥ ७ ॥ निवेश्य स्वपदे राजा, तं क्रमान्निर्मितोत्सवम् । मलयप्रभसूरीणां, पार्श्वे शिश्राय संयमम् ॥ ८ ॥ अथ विद्यानुभावेन, पुरंदरनरेश्वरः। राजाधिराजपदवीमाससाद महोदयाम् ॥ ९ ॥ प्रतिग्रामं प्रतिपुरं, स पृथिवीममंडयत् । प्रासादैः पूरिताह्लादैर्जिनेंद्रप्रतिमाद्भुतैः ॥ १० ॥ श्रीसंघानववात्सल्यं, प्रत्यहं स नृपो व्यधात् । परोपकारैः सर्वेषां, समाधिं च पदे पदे ॥ ११ ॥ आगच्छंतीं क्रमाद्वीक्ष्य, जरां तेजोऽपहारिणीम् । पुरंदरनराधीशः, संवेगरससूरितः ॥ १२ ॥

[1] शाली भरेण तोयेन जलधराः फलभरेण तरुशिखराणि । विनयेन च सत्पुरुषा, नमन्ति नैव कस्यापि भयेन ॥ ७ ॥

सुतं बंधुमतीजातं, जयंतं जयशालिनम् । स्वपदे सोत्सवं न्यस्य, निरस्य भवपंजरम् ॥ १३ ॥ द्विधा गुरोश्चतुःशत्या, नरेंद्राणां समं सुधीः । समीपे स्वपितुर्दीक्षां, जग्राह दयितासखः ॥ १४ ॥ युग्मम् । अधीत्यैकादशांगानि, राजर्षिर्विधिपूर्वकम् । स्थानकाभिग्रहं घोरं, चक्रे गुरुगिरा यथा १५ ॥ संघस्य भोज्यवस्त्रादिदानैरापन्निवारणैः । तीर्थयात्रादिकार्येषु, साहाय्यसाहाय्यपूरणैः ॥ १६ ॥ भक्ताद्यैः साधुसाध्वीनां, श्राद्धश्राद्धीव्रजस्य च । कृत्यैर्यथोचितैः कुर्वन्, समाधानं त्रिशुद्धितः ॥ १७ ॥ स्थानं सप्तदशं तीर्थकरकर्मनिबंधनम् । आराध्य पुरंदरर्षिर्यावज्जीवं पराक्रमी ॥ १८ ॥ यतः—श्रीसंघवात्सल्यमुदारचित्तता, कृतज्ञता सर्वजनेष्वनुग्रहः । प्रपन्नधर्मे दृढताऽर्च्यपूजनं, तीर्थकरैश्वर्यनिबंधनानि । १९ । राजर्षिहृदयस्थैर्य—परीक्षार्थं बिडौजसा । आद्येन पुंडरीकाद्रि—यात्रायां विधिना व्रजन् ॥ २० ॥

सम्यग्ज्ञानक्रियाशाली, सत्पात्रेषु धनव्ययी । श्रीसंघो दर्शितो भूयान्, पादगामी चतुर्विधः ॥ २१ ॥ किंचिन्म्लानमुखांभोजः, पथि पाथेयमंतरा । श्रीमलयप्रभसूरीन्नत्वा संघो व्यजिज्ञपत् ॥ २२ ॥ निवेदय मुनिस्वामिन् !, मुनिर्संघसमाधिदम् । गुरुणा दर्शितस्तस्य, स राजर्षिरुदारहृत् ॥ २३ ॥ ततो राजर्षिमानम्य, श्रीसंघस्तीर्थमार्गगः । विनयं दर्शयन् सम्यग्, निजगाद सगद्गदम् ॥ २४ ॥ चौरैः रुद्धस्य संघस्य, पाथेयं नास्ति सन्मुने ! । भवता भवतापार्त्तितायिना देयमंजसा ॥ २५ ॥ भूयस्यो लब्धयः संति, भवतोऽतितपस्विनः । निर्व्याजं संघवात्सल्पसद्व्रतैकाविधायिनः ॥ २६ ॥ श्रीमान् श्रमणसंघस्तु, माननीयोऽर्हतामपि । ततस्त्वयाऽपि सान्निध्यं, विधेयं तस्य सांप्रतम् ॥ २७ ॥ यतः—

देवगुरुसंघकज्जे, चुन्निज्ज चक्कवट्टिसेन्नंपि । कुविओ मुणी महप्पा पुलागलद्धीइ संपन्नो ॥ २८ ॥ गुरोरादेशमासाद्य,

ततः साधुः समाधिमान् । श्रीसंघपथमायातः, कल्पद्रुरिव जंगमः ॥ २९ ॥ सुवर्णवृष्टिं निर्माय, निर्मायनिजलब्धितः । तीर्थयात्रिकलोकानां, यथेच्छं शंबलं ददौ ॥ ३० ॥ साधूनां संयतीनां च, भक्तपानादि शुद्धिमत् । ग्रामांतरादुपानीय, स भक्तिता शक्तितो व्यधात् ॥ ३१ ॥ संघोपतापिनः सर्वे, चौराः क्रूराशयास्ततः । स्तंभिता मुनिना तेन, विमुक्ताः प्रतिबोध्य च ॥ ३२ ॥ तीर्थगामी ततः संघः, प्रमोदं परमं दधत् । तमानम्याग्रतोऽचालीद्विधिना निरुपद्रवम् ॥ ३३ ॥ संघं संप्रेष्य राजर्षिः, पश्चात् श्रीगुरुसन्निधौ । आगच्छन् भावनामेवं, विदधे पथि शुद्धधीः ॥ ६४ ॥ त एव मुनयो मान्यास्तेषां जन्म फलेग्रहि । निर्मायं निर्मिता संघभक्तिर्यैर्निजशक्तितः ॥ ३५ ॥ यतः—

[२]आसन्नसिद्धियाणं लिंगमिणं जिणवरेहिं पन्नत्तं । संघंमि चेव पूआ सामन्नेणं गुणनिहीणं ॥ ३६ ॥ संघे तित्थयरंमि य सूरिसूरिसीसगुणमहग्घेसु । जेसिं चिय बहुमाणो तेसिं चिय दंसणं सुद्धं ॥ ३७ ॥ इत्येवं भावनां तस्य, कुर्वतस्त्रिदशेश्वरः । स्वांतशुद्धिं परिज्ञाय, प्रादुरासीत्प्रसन्नहृत् ॥ ३८ ॥ नत्वा स्तुत्वा च राजर्षिं, तं भक्त्या स्वर्गिणां पतिः । मलयप्रभसूरींद्रं, तद्गुरुं पृष्टवानिति ॥ ३९ ॥ सृजता संघवात्सल्यं, साधुना गुणसिंधुना । मुनींद्र ! किं फलं प्रापि, सुरराज्यदिवस्पतिम् ॥ ४० ॥ अनेन तीर्थकृत्कर्म, शर्मश्रेणिप्रदं महत् । अर्जितं संघवात्सल्यं, साधुना कुर्वता सता ॥ ४१ ॥ निशम्येति, दिवः स्वामी, मुदितात्मा निजं पदम् । आससाद प्रणम्यांघ्री, सुगुरोस्तस्य तत्क्षणात् ॥ ४२ ॥ आराध्य स्थानकं सप्तदशं

देवगुरुसपर्कार्यं, चूर्णयत् चक्रवर्तिसैन्यमपि । कुपितो मुनिमहात्मा, पुलाकलब्ध्या सपन्न ॥ २८ ॥

२ आसन्नसिद्धिकानां लिङ्गमिदं जिनवरैः प्रज्ञप्तं । संघे एव पूजा सामान्येन गुणनिधीनाम् ॥ ३३ ॥ संघे तीर्थकरे च सूरिसूरिशिष्यगुणमहार्घेषु । येषामेव बहुमानो तेषामेव दर्शनं शुद्धम् ॥ ७५ ॥

राजर्षिरात्मसात् । कमाष्टके महाशुक्रश्रियं शक्रपदोपमाम् ॥ ४३ ॥ वंधुमत्यपि तत्रैव, देवलोके सुरोऽभवत् । मायाशल्यविनिर्मुक्तः, शुद्धसंयमपालनात् ॥ ४४ ॥ विदेहे तीर्थकृद् भावी, राजर्षिस्तु ततश्च्युतः । तथा गणभृतामाद्यो, भावी बंधुमतीसुरः ॥ ४६ ॥ त्रिभुवनोत्कृष्टगुणावलोके, श्रीसंघलोके विलसद्विवेके । द्विधा समाधिं कुरुते सुधीर्यः, स एव लोके पुरुषोत्तमः स्यात् ॥ ४७ ॥ एवं पुरंदरनरेश्वरपुंगवस्य, श्रीसंघलोकगुरुभक्तिसमाधिसारम् । वृत्तं निशम्य शुचिदृष्टिविशुद्धिभाजः, श्रीस्थानकान् विरचयतु तपोभिरुग्रैः ॥ ४८ ॥ इति सप्तदशस्थानकं समाप्तम् ॥

अथाष्टादशस्थानकाधिकारः–तत्र विवेकिना विशेषतोऽपूर्वश्रुतग्राहिणा निरंतरं भवितव्यं, श्रुतं चांगानंगभेदाभ्यां द्विप्रकारं, तत्रांगानि श्रीआचारांगादीनि, अनंगानि च चतुर्दशपूर्वो(औपपातिकाद्यु)पांगावश्यकोत्तराध्ययनश्रीकल्पाध्ययनादीनि, सूत्रार्थोभयरूपस्य ग्रहणं सावधानतया पठनपाठनवाचनाविलोकनैकाग्रता च, यतः–अपूर्वज्ञानग्रहणे महती कर्मनिर्जरा। सम्यग्दर्शननैर्मल्याच्चस्यात्तत्त्वमबोधतः ॥ १ ॥ अज्ञानी यत्कर्म क्षपयति बहुवर्षकोटिभिः प्राणी ॥ तद् ज्ञानी गुप्तात्मा क्षपयत्युच्छ्वासमात्रेण ॥ २ ॥ [1]छट्ठट्ठमदसमदुवालसेहिं अबहुसुअस्स जा सोही । इत्तो अ अणंतगुणा सोही जिमियस्स नाणिस्स ॥ ३ ॥ नाणमकारणं बंधू नाणं मोहंधयारदिणबंधू । नाणं संसारसमुद्दे ॥ ४ ॥

---

[1] षष्ठाष्टमदशमद्वादशैरबहुश्रुतस्य या शुद्धिः । इतोऽनन्तगुणा शुद्धिर्जिमितस्य ज्ञानिनः ॥ ३ ॥ ज्ञानमकारणं बन्धुः ज्ञानं मोहान्धकारदिनबन्धुः । ज्ञानं संसारसमुद्रोत्तारणे बन्धुरं जानीहि ॥ ४ ॥

सारणे बधुरं जाण ॥४॥ नाणेण सव्वभावा, नज्जंति सुहुमबायरा लोए । तम्हा नाणं कुसलेण, सिक्खियव्वं पयत्तेणं ॥५॥ अपूर्वज्ञानग्रहणात्तीर्थकृत्त्वमनुत्तमम् । लभते भुवनानन्दि, प्राणी सागरचन्द्रवत् ॥६॥ तथाहि-इहैव भरतक्षेत्रे, मलयाद्रिमदद्युरे । आसीदमृतचन्द्राख्यः, क्षितिसीमन्तिनीपतिः ॥७॥ स्वान्ते तस्य सुतो भर्तुर्द्वयमेवातिवल्लभम् । पराङ्गनापरित्यागः, परमार्थितपूरणम् ॥८॥ तस्य चन्द्रकला चन्द्रकलेवाजनि निर्मला । पद्मनेत्रा पवित्राङ्गी, प्रिया पीयूषशीतला ॥९॥ तयोः सागरचन्द्रोऽभूत्तन्द्रन् कुवलयोल्लतिम् । विश्वातिशायिसौन्दर्यवर्यश्रीवसतिः सुतः ॥१०॥ नर्तक्य इव नृत्यन्ति, यस्याङ्गे रङ्गमण्डपे । कला अविकलाः शश्वत्, पृथुलक्षणशालिनि ॥११॥ वर्द्धमानः क्रमोदयः, प्राचीनसुकृतोदयात् । यौवनं प्राप्तवान् विश्वदृष्टिसारङ्गकाननम् ॥१२॥ नवीनोद्गतसौभाग्यामृतसागरसन्निभम् । सागरेन्दुं तदालोक्य, न कस्को विस्मयं ययौ ? ॥१३॥ प्रसत्तान्नृपतेः प्राप्य, युवराजपदाश्रयम् । कस्योपकारं नाऽकार्षीदसौ सुकृतिपुङ्गवः ! ॥१४॥ हैमपञ्चशतीदानात्, स मनस्वी महाशयः । विद्याविदोऽन्यदा कस्मादार्यामेतामुपाददे ॥१५॥ "अप्रार्थितमेव यथा, समेति दुःखं तथा सुखमपीह । तत्त्यक्त्वा संमोहं, प्रयतध्वं धर्म एव बुधाः ! ॥१६॥" पठन्नार्यामिमां मन्त्रवर्णावलिमयीमिव । प्रमोदमाससादाऽसौ, युवराजः पदे पदे ॥१७॥ लीलोद्यानेऽन्यदा प्राप्तः, क्रीडायै सवयोऽन्वितः । प्राग्जन्मवैरिणा हृत्वा, नाकिना केनचित्क्षणात् ॥१८॥ सागरः सागरेऽक्षेपि, कोलकल्लोलभीषणे । क्रियोज्झितेन गुरुणा, प्राणीव भवसागरे ॥१९॥ युग्मम् । आसाद्य फलकं तत्र, सम्यक्त्वमिव सुस्थिरम् । सप्तभिर्वासरैस्तीर्त्वा, संसारमिव सागरम् ॥२०॥ अमरद्वीपमायातो, निर्वाणमिव निश्चलम् । सूर्यातपफलस्वादादिभिः स्वस्थीबभूव सः ॥२१॥ अन्तःस्वान्तो. सरकायो, सुखी



---

१ सारणे वन्धुरं जानीहि ॥४॥ ज्ञानेन सर्वभावाः ज्ञायन्ते सूक्ष्मबादरा लोके । तस्मात् ज्ञानं कुशलेन शिक्षितव्यं प्रयत्नेन ॥५॥ २ मित्रम्

...मोदाद्- दश- स्थान- केनाग- सार च- न्द्र हेम- माल्योः पाणि- ग्रहणं

तत्र गतवानसौ । सहकारं सदाकारं, ददर्श फलितं ततः ॥२२॥ तच्छायामाश्रय यावत्,सागरेन्दुः सुखेच्छया । इष्टिद्वन्द्वास्सवं तावत, कन्या-
[illegible] ॥२३॥ तरितरसरे म रविद्धारमर्पिडिता । निक्षिपन्ती गले पाशं, वदन्ती चैवमुच्चकैः ॥२४॥ उद्यानदेवताः सर्वा,
[illegible] विशाम् । शृण्वन्तु साम्प्रतं तद्यां, सावधाना गिरं मम ॥२५॥ भर्त्ता सागरचन्द्रो मे, पुण्यलावण्यसागरः । न स्याद्दि
भवे यत्तत्प्रभावाजीवितं मे ॥२६॥ चतुर्भिः कलापकं । स्वनामश्रवणोद्भूतप्रमोदः सकुतूहलः । ततोऽसौ विस्मितो दध्यौ, कैषा विश्वविमो-
हिनी ॥२७॥ स पाशं तूर्णमुच्छिद्य, सुधामधुरया गिरा । प्राह चारुमवंध भद्रे !, किमर्थं कुरुषे वने ? ॥२८॥ लज्जा-
भानवती तस्या, मादरस्मरलोचना । ताम्बूलवाहकः कश्चित्तत्राऽऽगत्य न्यवेदयत् ॥२९॥ एतस्मिन्नमरद्वीपे, पुरे सुरवराभिधे । राजाऽस्ति
सुरभानुर्भानुमानिव तेजसा ॥३०॥ चन्द्रानना प्रिया तस्य, हेममाला च तत्सुता । रक्ता सागरचन्द्राख्येऽमृतचन्द्रनृपात्मजे ॥३१॥ हृता
[illegible] च सा, सुसन्ध्योपचारिणा । यौवनोन्मादमत्तेन, कामान्धेन दुरात्मना ॥३२॥ द्वन्द्वयुद्धेन सम्प्रेष्य, यमसद्मनि तं जवात् । मातुलेन
[illegible]या देवमानीताऽधिततेजसा ॥३३॥ तद्वियोगातिना ह्यत्र, सैषा चन्द्रमुखी स्खे ! । भवता रक्षिता पाशच्छेदतो मृतिमिच्छती ॥३४॥ उभा-
[illegible] कन्यायाः स्थितिर्मे दर्शिम् । स्वमप्याख्याहि शृण्वन्त, निजं वीरपुरन्दर ॥३५॥ स्वावरूपं स्वयं वक्तुं, युक्तं नैव
[illegible]नाम् । निजे स्थाने विचिन्त्येति, तस्थौ मौनेन सागरः ॥३६॥ सागरेन्दुरसावेव हेममालेति चेतसि । लज्जाविनयदाक्षिण्यैर्विदुषी निश्चि-
काय सा ॥३७॥ अत्रान्तरे समायाता, तद्दिव्यमितततेजसः । माता विद्युल्लतानाम, धाम सम्यक्त्वसम्पदः ॥३८॥ पवित्रं मूर्तेः पुत्रं, तमालोक्य
जगौ तदा । यदा नन्दीश्वरे द्वीपे, वन्दित्वा श्रीजिनार्चनम् ॥३९॥ आगच्छन्त्या निजं स्थानमसौ सौन्दर्यगर्भितः । मलयादिपुरे दृष्टो, दृष्टेर-

१ सद्याभिप्रायः २ निपुणः

मृतशृष्टिभृत् ॥४०॥ युग्मम् । सागरेन्दुः स एवायं, नूनमत्र महावने । केनचिद्धेतुनाऽऽयासीत्, कन्याभाग्यमहोदयात् ॥४१॥ ततोऽस्मै दीन-तामेषा, वत्साऽतुच्छमहोत्सवम् । अनुरूपवरप्राप्तिर्यत्कार्याः श्रेयसा भवेत् ॥४२॥ पाणिग्रहोत्सवं तत्राऽमिततेजा नभश्चरः । ततस्तयोर्विनिर्माय, शर्मारामसुखाम्बुदम् ॥४३॥ अमरादिपुरे तौ च, नीतवानुच्छ्रितध्वजे । हृष्टो भुवनभानुस्तु, जामातुर्भक्तिमातनोत् ॥४४॥ युग्मम् । सप्तभौमे ततः सौधे, समं वनमालया । स तस्थौ मुदितस्वान्तो, विलाससुखमालया ॥४५॥ सुप्तो निश्यन्यदा केनचिद् पाप्म दुरात्मना । प्रक्षिप्तः श्वापदाक्रान्ते, सागरः पर्वतोपरि ॥४६॥ पुण्यानुभावतस्तत्र, पतितोऽसौ सरोवरे । तीर्त्वा बहिरायातो विवेकी राजहंसवत् ॥४७॥ अथ भानूदये तत्र, भ्रमन् भूभृति सागरः । हेममालावियोगार्तो, विममर्श चिरं हृदि ॥४८॥ यावदेकस्य दुःखस्य, पारं नैव व्रजाम्यहम् । तावद् द्वितीयमायातं, तदहो गुरुकर्मता ॥४९॥

यतः–यदुपार्जितमन्यजन्मनि, शुभमशुभं वा स्वकर्मपरिणत्या । तत् शक्यमन्यथा नैव, कर्तुं देवासुरैरपीह ॥५०॥

ये वज्रमयदेहास्ते, शलाकाः पुरुषा अपि । न मुच्यन्ते विना भोगे, स्वनिकाचितकर्मणः ॥५१॥ इति,

मद्वियोगेन सा बाला, कथं प्राणान् धरिष्यति? । कोमला कदली नेवाशनिर्पातक्षमा भवेत् ॥५२॥ यद्वाऽऽर्याया ममाऽत्यर्थः, सुखदुःखे रता परः । ध्यायन्निति स पठन्नार्यो, फलैर्वृत्तिं विनिर्ममे ॥५३॥ ततो गच्छन्नसावग्रे, ददर्श सुकृतोदयात् । प्रसन्नप्रतिमं विद्याधरं निर्ग्रन्थपुङ्गवम् ॥५४॥ सागरो बहुमानेन, तं ननाम मुनीश्वरम् । मुनिनाऽपि तदाकारि, तदग्रे धर्मदेशना ॥५५॥ भवेषु नृभवः श्रेष्ठस्तस्मिन्नुच्चकुलोदयः । तस्मिन्नप्यार्हतो धर्मस्तत्रापि श्रुतदेवता ॥५६॥ शरीराद्वाङ्मयो धर्मो, वाङ्मयान्मानसो महान् । जघन्यमध्यमोत्कृष्टः, प्राणिनः शर्मकारणम् ॥५७॥



१ विद्युत्पात०

अथाद-
दश-
स्थान-
के सा-
गर च-
न्द्र हेम-
मालयोः
पाणि-
ग्रहणं

तत्र प्रमनसौ । सहकारं सदाकारं, ददर्श फलितं ततः ॥२२॥ तच्छायामाश्रया यावत्, सागरेन्दुः सुखेच्छया । दृष्टिद्वन्द्वास्तवं तावत्, कन्या-मैक्षिष्ट काञ्चन ॥२३॥ तस्मिन्नवसरे मारविकारभरपीडिता । निक्षिपन्ती गले पाशं, वदन्ती चैवमुच्चकैः ॥२४॥ उद्यानदेवताः सर्वाः, सर्वेऽपि स्वामिनो दिशाम् । शृण्वन्तु साम्प्रतं सर्व्वा, सावधाना गिरं मम ॥२५॥ भर्त्ता सागरचन्द्रो मे, पुण्यलावण्यसागरः । न स्याद्यदिह भवे चेद्भूयादागामिजन्मनि ॥२६॥ चतुर्भिः कलापकं । स्वनामश्रवणोद्भूतप्रमोदः सकुतूहलः । ततोऽसौ विस्मितो दध्यौ, कैषा विश्वविमोहिनी ॥२७॥ तं पाशं तूर्णमुच्छिद्य, सुधामधुरया गिरा । प्राह चात्मवधं भद्रे !, किमर्थं कुरुषे वने ? ॥२८॥ लज्जानम्रवती तस्थौ, सा वरकमललोचना । तावद्विद्याधरः कश्चित्तत्राऽऽगत्य न्यवेदयत् ॥२९॥ एतस्मिन्नमरद्वीपे, पुरे सुरवराभिधे । राजाऽस्ति भुवनभानुर्भानुमानिव तेजसा ॥३०॥ चन्द्रानना प्रिया तस्य, हेममाला च तत्सुता । रक्ता सागरचन्द्राख्येऽमृतचन्द्रनृपात्मजे ॥३१॥ हृता लीलावने प्राप्ता, सुसेनव्योमचारिणा । यौवनोन्मादमत्तेन, कामान्धेन दुरात्मना ॥३२॥ द्वन्द्वयुद्धेन सम्प्रेष्य, यमसद्मनि तं बलात् । मातुलेन मया सेयमानीताऽमिततेजसा ॥३३॥ तद्वियोगाग्निना तप्ता, सैषा चन्द्रमुखी सखे ! । भवता रक्षिता पाशच्छेदतो मृतिमिच्छती ॥३४॥ उमा-[1]कर्णीं समाकर्ण्य, कन्यायाः स्थितिमीदृशीम् । स्वमप्यास्याहि वृत्तान्तं, निजं वीरपुरन्दर ॥३५॥ स्वस्वरूपं स्वयं वक्तुं, युक्तं नैव महात्मनाम् । निजे स्वान्ते विचिन्त्येति, तस्थौ मौनेन सागरः ॥३६॥ सागरेन्दुरसावेव हेममालेति चेतसि । लज्जाविनयदाक्षिण्यैर्विदुषी[2] निश्चिकाय सा ॥३७॥ अत्रान्तरे समायाता, तस्यामिततेजसः । माता विद्युल्लतानाम, धाम सम्यक्त्वसम्पदः ॥३८॥ पवित्रं सूनोः पुत्रं, समालोक्य जगौ तदा । मया नन्दीश्वरे द्वीपे, वन्दित्वा श्रीजिनावलीम् ॥३९॥ आगच्छन्त्या निजं स्थानमसौ सौन्दर्यगर्भितः । मलयादिपुरे दृष्टो, दृष्टेर-

१ सदयाभिप्रायः २ निपुणः

मृतवृष्टिभृत् ॥४०॥ युग्मम् । सागरेन्दुः स पर्यायं, नूनमत्र महावने । केनचिद्धेतुनाऽऽयासीत्, कन्याभाग्यमहोदयात् ॥४१॥ ततोऽस्मै दीयतामेषा, वत्साऽतुच्छगृहोत्सवम् । अनुरूपवरप्राप्तिर्यत्कार्याः श्रेयसा भवेत् ॥४२॥ पाणिग्रहोत्सवं तत्राऽमिततेजा नभश्चरः । ततस्तयोर्विनिर्माय, शर्मारामसुराम्बुदम् ॥४३॥ अमरादिपुरे तौ च, नीतवानुच्छ्रितध्वजे । दृष्टो भुवनभानुस्तु, जामातुर्भक्तिमातनोत् ॥४४॥ युग्मम् । सप्तभौमे ततः सौधे, समं कनकमालया । स तस्थौ मुदितस्वान्तो, विलाससुखमालया ॥४५॥ सुप्तो निश्यन्यदा केनचिदुत्पाट्य दुरात्मना । प्रक्षिप्तः श्वापदाक्रान्ते, सागरः पर्वतोपरि ॥४६॥ पुण्यानुभावतस्तत्र, पतितोऽसौ सरोवरे । तरीत्वा बहिरायातो विवेकी राजहंसवत् ॥४७॥ अथ भानूदये तत्र, भ्रमन् भूपति सागरः । हेममालावियोगार्तो, विममर्श चिरं हृदि ॥४८॥ यावदेकस्य दुःखस्य, पारं नैव व्रजाम्यहम् । तावद् द्वितीयमायातं, तदहो गुरुकर्मता ॥४९॥

यतः—यदुपार्जितमन्यजन्मनि, शुभमशुभं वा स्वकर्मपरिणत्या । तत् शक्यमन्यथा नैव, कर्तुं देवासुरैरपीह ॥५०॥

ये वज्रमयदेहास्ते, श्लाघ्याः पुरुषा अपि । न मुच्यन्ते विना भोगैः, स्वनिकाचितकर्मणः ॥५१॥ इति.

मद्वियोगेन सा बाला, कथं प्राणान् धरिष्यति ? । कोमला कदली नैवाशनि[1]पातक्षमा भवेत् ॥५२॥ यद्वाऽऽशैषा ममाऽत्यर्थः, सुखदुःखे सखा परः । ध्यात्वेति स पथश्रान्तो, फलैर्वृत्तिं विनिर्ममे ॥५३॥ ततो गच्छन्नसावग्रे, ददर्श सुकृतोदयात् । प्रशान्तप्रतिमं विद्याधरं निर्ग्रन्थपुङ्गवम् ॥५४॥ सागरो बहुमानेन, तं ननाम मुनीश्वरम् । मुनिनाऽपि तदाकारि, तदग्रे धर्मदेशना ॥५५॥ भवेषु नृभवः स्वल्पस्तस्मिन्नुच्चकुलोदयः । तस्मिन्नप्यार्हतो धर्मस्तत्रापि श्रुतदेवता ॥५६॥ शरीराद्वाङ्मयो धर्मो, वाङ्मयान्मानसो महान् । अजघन्यमध्यमोत्कृष्टः, प्राणिनः शर्मकारणम् ॥५७॥



---

१ विद्युत्पात०

दानशीलतपोभावैर्धर्मोऽयं स्याच्चतुर्विधः । एकैकोऽपि भवेद्भेदैस्त्रिधा सत्त्वादिभिः पुनः ॥५८॥ श्रद्धया परया शुद्धो, मनोवाक्कायकर्मभिः । अफलाकाङ्क्षिभिर्धर्मः, कृतोऽयं सात्त्विकः स्मृतः ॥५९॥ सत्कारमानपूजार्थं, धर्मोऽयं छद्मना भवेत् । एणातोऽयं राजसो राज्यऋद्ध्यादि-फलकाङ्क्षिणाम् ॥६०॥ मिथ्याग्रहेण यच्चात्मपीडया क्रियते क्रिया । परस्योच्छेदनार्थं वा, तामसं सुकृतं मतम् ॥६१॥ सात्त्विकं सुकृतं सर्वोत्तमं सर्वसुखावहम् । त्रिधा शुद्धेन भावेन, निर्मितं शालिभद्रवत् ॥६२॥ राजसं सुकृतं किञ्चित्, शुद्धं स्यात्स्वर्गसम्पदे । पापानुबन्धिपुण्याभं, तामसं तदुदाहृतम् ॥६३॥ जिनेन्द्रपूजनं पात्रदानं सन्मुनिवन्दनम् । सत्त्वतो निर्मितं धर्मयुक्तं स्याच्छिवशर्मणे ॥६४॥ सम्यग्दर्शनसंशुद्धा क्रिया स्यात्सफलाऽखिला । मिथ्यात्वदूषिता सा तु, दुर्भगाऽऽभरणोपमा ॥६५॥ निशम्य देशनामेवं, सागरः प्रत्यपद्यत । सम्यक्त्वशुद्ध सुश्राद्धधर्मं श्रीगुरुसन्निधौ ॥६६॥ यतीन्द्रं तं नमस्कृत्य, व्रजत्यग्रे नृपाङ्गजः । आगच्छन्तीं निरैक्षिष्ट, सेनां कस्यापि भूभुजः ॥६७॥ गजवाजिरथारूढैः, मरुद्धान्तरमत्सरैः । उदायुधैस्ततो वीरकुञ्जरवीरकेसरी ॥६८॥ सहसा सागरः प्रोचे, वेष्टयित्वा समन्ततः । शस्त्रं गृहाण रे दुष्ट ! ; मृत्युरागात्तवाधुना ॥६९॥ ॥युग्मम्॥ सर्वतः सैन्यमालोक्य, कल्पान्तानलवज्ज्वलत् । उत्प्लुत्याऽऽयुधसम्पूर्णे, निविष्टः कस्यचिद्रथे ॥७०॥ सागरोऽपि रथी श्रीमान्, हत्वा तद्रथसारथिम् । बध्वा परिकरं युद्धकर्मणे सज्जतां दधौ ॥७१॥ युग्मम्॥ युद्धं विधाय तैः सार्द्धं, क्रुद्धोऽसौ विविधाऽऽयुधैः । दूरीचक्रे द्विपत्सैन्यं, भानुस्तिमिरोत्करम् ॥७२॥ ततः पुण्यानुभावेन, द्वन्द्वयुद्धविधानतः । भूपं समरविजयं तं जिगायाऽऽजौ जवेन सः ॥७३॥ तस्मिन्नवसरे तत्राऽऽगत्यैका विनयान्विता । वृद्धा पद्मेक्षणाऽऽचख्यौ, सागरं नतिपूर्वकम् ॥७४॥ भूमान् कमल-चन्द्रोऽस्ति, नगरे कुशवर्द्धने । प्रिया समरकान्ता च, तस्य वामाङ्गमण्डनम् ॥७५॥ तयोर्भुवनकान्ताऽस्ति, नन्दना विश्वनन्दना । जिनेन्द्र-धर्मनिष्णाता, पूताङ्गी जिनपूजया ॥७६॥ कथञ्चिद्भवतः श्रुत्वा, सौभाग्यगुणसम्पदम् । सानुरागेयमिच्छन्ती, त्वत्पाणिग्रहणोत्सवम् ॥७७॥

वैलेशनगरस्वामिसुदर्शनांगजन्मना । संग्रामविजयाख्येनानीता हृत्वाऽत्र कानने ॥ ७८ ॥ युग्मं ॥ स त्वया निर्जितो वीरः, स्वौजसा समरांगणे । तेनोद्वह सुतामेतां, गुणक्रीतां नृपात्मज! ॥ ७९ ॥ अहं चंद्रानना तस्या, धात्री तत्प्रेषिता सती । इहागमं विलंबं मा, तद्विधेहि मयोदिते ॥ ८० ॥ पाणौ चक्रे ततस्तेन, सा तदैव तदुक्तितः । संग्रामविजयभार्यैर्नरेंद्रैर्निर्मितोत्सवम् ॥ ८१ ॥ सत्कृतो भूभृता पुत्रीप्रीतिस्फीतिपुरस्सरम् । रथारूढां विनिर्माय, सागरस्तां सधर्मिणीम् ॥ ८२ ॥ सुकृतीव श्रियं हृष्टो, व्रजन्निजपुरं प्रति । रत्नमंदिरमैक्षिष्ट, प्रभामंडलमंडितं ॥ ८३ ॥ रथ एव प्रियां मुक्त्वा, कौतुकाकुलमानसः । तन्मध्ये प्रविवेशासौ, साहसी साहसाधिकः ॥ ८४ ॥ वेणुवीणामृदंगाढ्या, गीतनृत्यपरायणाः । अद्राक्षीद्वर्णिनीः पंच, वर्णनीयवपुर्विभाः ॥ ८५ ॥ तास्तत्र चित्रकृद्रूपा, दृष्ट्वा दृष्टिसुधास्रवाः । उत्कल्लोलमना आसीत्सागरः कौमुदीनिभाः ॥ ८६ ॥ प्रतिपत्तिस्तदा ताभिरभ्युत्थानासनार्पणैः । सौंदर्यशालिनस्तस्य, विदधे विनयाद्भुता ॥ ८७ ॥ तासु ज्येष्ठा गुणैर्ज्येष्ठं, तमाख्यद्रचितांजलिः । कोऽसि त्व सुकृती कस्य, तनूजश्च निवेदय ॥ ८८ ॥ न्यवेदि तेन निःशेषं, स्वरूपं स्वं यथास्थितम् । तन्निशम्य पुनः प्राह, सा विस्मेरमुखांबुजा ॥ ८९ ॥ वैताढ्यपर्वते रत्नपुरे विद्याधरप्रभुः । सिंहवत्सिंहनादोऽस्ति, बिभ्राणो नर्मविक्रियाम् ॥ ९१ ॥ तस्य भद्रा जया गौरी, तारा रंभेति विश्रुताः । सुतास्तवागम ज्ञात्वा, नैमित्तिकगिरा वयम् ॥ ९२ ॥ विद्याशक्त्या विनिर्माय, रत्नमंदिरमुन्नतम् । स्थापिता जनकेनात्र, पाणिग्रहणहेतवे ॥ ९३ ॥ ततः प्रसादमाधाय, कृपाधाम विधेहि नः । मनोरथानां सर्वेषां, पूरणं नृपनंदन ! ॥ ९४ ॥ तदैव निर्ममे तेन, कुमारेण प्रमोदतः । गंधर्वविधिना तासां, युगपत्पाणिपीडनम्

॥ ९५ ॥ततस्ताभिः समं तत्र, सुस्वादा मोदकावलीः । आस्वाद्य स सुखं भेजे, प्रियासंयोगजं क्षणम् ॥ ९६ ॥ क्षण-
मात्रं रतिर्भुक्ता, सौख्ये सांसारिके सताम् । ध्यात्वेति स ततस्ताभिरलंचक्रे रथं सुधीः ॥ ९७ ॥ ततो व्रजन्नसौ
मार्गे, रथस्थपद्वधूयुतः । आलुलोकेऽर्हतश्चैत्य, विभ्रत्कांचनसंपदम् ॥ ९८ ॥प्रविश्य विधिना तस्मिन्नसौ चंद्रांशुनिर्म-
लाः । ननाम प्रतिमा जैनीः, पंचांगनतिपूर्वकम् ॥ ९९ ॥तत्प्रिया अपि निष्पापाः, प्रणम्य श्रीजिनेश्वरान् । भाव-
नां भावयामासुः, सुधामधुरया गिरा ॥ १०० ॥ कुमारः कौतुकी चैत्यशृंगमारूढवांस्तदा । पश्यन् प्रासादसौंदर्य, के-
नचित्पातितोऽवनौ ॥ १ ॥ अखंडिताखिलांगोऽसौ, परं पुण्यानुभावतः । तस्थौ यत्र चिरस्थायि, दुःखं सन्न्याय-
शालिनः ॥ २ ॥ भार्याविलोकन यावत्सृजत्यर्हद्गृहे ततः । तावदालोकते नैवः, ताः पुनः क्वापि सागरः ॥ ३ ॥
प्रिया मे जैनवेश्मस्थाः , केनचिद् द्विषता हृताः । इति ध्यायन् क्षणं तस्थौ, चिंताक्रांतमना असौ ॥ ४ ॥
ततः सर्वार्त्तिघात्यर्थं, शुचीभूय जगत्पतिम् । अर्हंत पूजयामास, स सुधीः स्मेरवारिजैः ॥ ५ ॥ यतः—याति दु-
ष्टदुरितानि दूरतः, कुर्वते सपदि संपदः पदम् । भूषयंति भुवनानि कीर्त्तयः, पूजया विहितया जगद्गुरोः ॥ ६ ॥
तस्मिन्नवसरे तत्रामृतचंद्रमहीभुजः । वयस्यः श्रीपुरस्वामी, भार्यया सुतया समम् ॥ ७ ॥ धर्मनामा भुवो भर्त्ता,
प्राप्तवान् सपरिच्छदः । नैमित्तिकगिरा ज्ञात्वा, सागरेंदुं समागतम् ॥ ८ ॥ युग्मं ॥ सुताभिः पञ्चभिः साकं,
सिंहनादोऽपि खेचरः । तत्रायातोऽर्हतां मूर्त्तीर्वंदित्वा निजगाद तम् ॥ ९ ॥ कुमार ! भवता दृष्टोऽमिततेजा न-
भश्चरः । यः प्राग् कनकमालाया, मातुलो जलधेस्तटे ॥ १० ॥ पद्मोत्पलौ सुतौ तस्य, दुर्विनीतौ महोद्धतौ ।

हृता भुवनकांता ते, प्रिया पद्मेन तत्र सा ॥ ११ ॥

पातयित्वा जिनागारशृंगात्त्वामुत्पलेन तु । भंक्त्वा हेमगृहं भार्यापंचकं जगृहे तव ॥ ९२ ॥ मया निर्माय संग्रामं, घोरं विद्याबलात्ततः । प्रियापंचकमानीतं, निहत्योत्पलखेचरम् ॥ ९३ ॥ पद्मस्तु पाप्मनः सद्म, रुदतीं सुदतीं तव । गृहीत्वा दयितां प्राप, वैताढ्ये तरसा गिरौ ॥ १३ ॥भवद्वियोगरोगार्त्ता, निराहारा निराश्रया । तत्र सा युवती नूनं, प्राणत्यागं करिष्यति ॥ १४ ॥ इत्याकर्ण्य कुमारोऽभूद्दुःखार्तस्तद्वियोगतः । प्रियापंचकमा-लोक्य, मनाग् प्रीतमनाः पुनः ॥ १५ ॥ ततो धर्मात्मजां तत्र, परिणीयाथ सागरः । भूयसीं जगृहे विद्यां, सिं-हनादनभश्चरात् ॥ १६ ॥ पाठसिद्धास्ततो विद्यास्तस्य पुण्यप्रभावतः । सर्वा जयवरं प्रादुर्भूय प्रददिरे रयात् ॥१७॥ ततोऽभ्यर्च्य जगद्भर्तुः, प्रतिमा भक्तिभावितः । सिंहनादादिभिः सार्कं, पाकशासनसन्निभः ॥ १८ ॥ वैताढ्यपर्वते नाकपुरे सुरपुरोपमे । विद्याविमानमारुह्य, सागरः प्राप्तवान् क्षणात् ॥ १९ ॥ युग्मं ॥ आदादमिततेजास्तु, प्रबो-ऽय तनयं निजम् । तस्मै भुवनकांताख्यां, प्रियां पुण्यवतीं सतीम् ॥ २० ॥ आनाय्य कनकमालां, तत्रासौ त-स्थिवांश्चिरम् । प्रियाभिरष्टभिः सार्कं, हृदयंगमशर्मभाक् ॥ २१ ॥

दत्ता विद्याधराधीशैः, स तत्र परिणीतवान् । विद्याधरसुता अन्या, अपि रूपगुणान्विताः ॥ २२ ॥रूपं वयः परि-करः पटुता प्रभुत्वमारोग्यमाप्त्यातिशयश्च कलाकलापे । तज्जन्म ते च विभवा भवमर्दनस्य, भक्तौ व्रजंति विनियो-गमिहार्हतो ये ॥ २३ ॥ ध्यात्वेति सागरः स्वांते, विवेकविकसन्मनाः । सिद्धकूटादिचैत्येषु, नित्यं स्नात्रोत्सवं

त्यधात् ॥ २४ ॥ अथ विद्याधरश्रेणिसेव्यमानो निजे पुरे । सागरेंदुः समायासीत्पितृपादनिनंसया ॥ २५ ॥ अथो विमानादुत्तीर्य, पितरौ प्रणनाम सः । सकलत्रं द्विधा पुत्र, दृष्ट्वा हृष्टौ च तौ भृशम् ॥ २६ ॥ उच्छ्रितध्वजशोभाढ्ये, पुरे पौरैः प्रमोदिभिः । विदधे वसुधाधीशादेशाद्वर्धापनोत्सवः ॥ २७ ॥ अन्येद्युराययौ तत्र, केवलालोकभास्करः । भुवनावबोधनामा, सूर्योद्याने मुनीश्वरः ॥ २८ ॥ वंदितुं तं समायासीन्नृपतिस्तनयान्वितः । मुनींद्रोऽपि पुरस्तस्य, धर्ममार्गं न्यवेदयत् ॥ २९ ॥ तद्यथा—

लक्ष्मीर्विश्मनि भारती च वदने शौर्यं च दोष्णोर्युगे, त्यागः पाणितले सुधीश्च हृदये सौभाग्यशोभा तनौ । कीर्तिर्दिक्षु सुपक्षता गुणिजने यस्माद्भवेद्देहिनां, सोऽयं वांछितमंगलावलिकृते धर्मः सदा सेव्यताम् ॥ ३० ॥ [1]पूआ जिणिंदेसु रई वएसु, जत्तो अ सामाइयपोसहेसु । दाणं सुपत्ते सवणं सुतत्थे, सुसाहुसेवा सिवलोगमग्गो ॥ ३१ ॥ आसाद्यावसरं राजा, सांजलिस्तं व्यजिज्ञपत् । हृतः केन कुतो हेतोः, सुतोऽयं सुकृती मम ? ॥ ३२ ॥ गुरुराख्यद्विदेहे द्वौ, भ्रातरौ स्नेहबंधुरौ । अभूता दयिता सासीज्ज्येष्ठस्य स्नेहला सती ॥ ३३ ॥ न कदापि वहिर्गंतुं, महत्यपि प्रयोजने । दत्ते साऽनुमतिं भर्तुः, प्रेमस्थेवमशीकृता ॥ ३४ ॥ अन्यदा गृहकार्यार्थं, प्रेषितो लघुबंधुना । ज्येष्ठो ग्रामांतरे भ्राता, प्रतिबोध्य च तत्प्रियाम् ॥ ३५ ॥ अनुजेन परीक्षार्थं, सा न्यगादि रहस्यदः । तीव्ररोगेण ते भर्त्ता, मृतो ग्रामांतरे पुनः ॥ ३६ ॥ देवरोक्तं तदाकर्ण्य, कर्णक्रकचसन्निभम् । मृता साऽपि क्षणादेव, स्नेहस्या-



[1] पूजा जिनेन्द्र सुरतिर्व्रतेषु यत्नश्च सामायिकपौषधयो दानं सुपात्रे श्रवणं श्रुतार्थयो सुसाधुसेवा शिवलोकमार्गः ॥ ३ ॥

हो दुरंतता ॥ ३७ ॥ पश्चात्तापं ततश्चक्रे, लघुभ्राता चिरं हृदि । परासोरागतिर्नैव, परं कस्यापि दृश्यते ॥ ३८ ॥ कतिभिर्दिवसैर्ज्येष्ठो, बंधुरागान्निजं गृहम् । अनुजेनोदितां वाचं, श्रुत्वा शोकातुरोऽजनि ॥ ३९ ॥चिरं रुरोद तन्मोहाद्धीमदुःखार्णमानसः । लघुबंधूपरि द्वेषं, बभार च निरंतरम् ॥ ४० ॥ न तेन सममाख्याति, न भुंक्ते च कथंचन । विधत्ते नैव विश्वासं, क्वापि कोपकरालहृत् ॥ ४१ ॥ क्रमेण मोहवैराग्यात् , तपस्यां तापसीमसौ । ज्येष्ठो जग्राह मिथ्यादृग्, दधत् कोपं लघूपरि ॥ ४२ ॥ समाराध्य तपस्तीव्रं, स क्रमादसुरोऽजनि । सम्यग्दृष्टिर्लघुभ्राताऽप्याश्रयत्संयमश्रियम् ॥ ४३ ॥ स तपस्यंस्तपस्तीव्रं, निष्कषायो जितेंद्रियः । एकादशांगमध्यैष्ट, विनयी गुरुसन्निधौ ॥ ४४ ॥ पूर्वजन्मजवैरेण, ज्येष्ठभ्रात्राऽसुरेण तु । स मुनिर्मारितः स्वर्गे, सुरोऽभूत्प्राणताभिधे ॥ ४५ ॥ ततश्च्युतो भवत्पुत्रो, जातोऽयं सुकृताकरः । ज्येष्ठबंधुरपि च्युत्वा, ततो भ्रांतो भवावलीम् ॥ ४६ ॥ नृभवं पुनरासाद्य, तापसस्ततोऽभवत् । देवो वह्निकुमारेषु, मिथ्यादृष्टिर्दयोज्झितः ॥ ४७ ॥ प्राग्जन्मवैरतस्तेन, कुमारोऽयं महार्णवे । उत्पाट्य सहसा क्षिप्तो, निद्रया मुद्रितो निशि ॥ ४८ ॥ प्राग्भवे निरतीचारचारित्राराधनादयम् । प्रापन्न क्वापि दुःखानि, तीव्राणि विषमेऽप्यहो ॥ ४९ ॥ त्रसस्थावरजंतूनां, रक्षां यः कुरुते त्रिधा । तस्य दुःखमपि प्रायः, सौख्याय किल कल्पते ॥ ५० ॥ उभाकर्णिः समाकर्ण्य, सद्गुरोरिति देशनाम् । जातजातिस्मृतिः स्माह, सागरेंदुर्मुनीश्वरम् ॥ ५१ ॥ संसारे भ्रमतो जंतोर्योनयो दुःखखानयः । कियत्यः सकलाः संति, कुलानां कोटिभिर्विभो! ॥ ५२ ॥ अवादीत्केवलज्ञानी, शृणु भूपालनंदन! । योनीनां च कुलानां च, स्वरूपं गदितं जिनैः ॥ ५३ ॥ 'पुढ-

वाइभेयभिन्ना, जेण भवे हुंति बहुविहा जीवा । तत्थवि य बहुविगप्पा जोनी य कुलाणि य तहा य ॥ ५४ ॥ पुढवीदगअगणिमारुअ इक्किके सत्तजोणिलक्खा य । वणपत्तेय अणंते दस चउदस जोणिलक्खा य ॥ ५५ ॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु । तिरिएसु हुंति चउरो चउदस मणुएसु लक्खा य ॥ ५६ ॥ बारस सत्त य तिन्नि य सत्त य कुलकोडिसयसहस्साइं । नेया पुढवीदगअगणिवाऊणं चेव पत्तेयं ॥ ५७ ॥ छव्वीसा पणवीसा सुरनेरइयाणं सयसहस्साइं । बारस य सयसहस्सा कुलकोडीणं मणुस्साणं ॥ ५८ ॥ सत्तट्ठ नव य कमसो बेइंदितेइंदिचउरिंदियाणं तु । सड्ढा बारहलक्खा कुलकोडीउ जलयराणं ॥ ५९ ॥ सड्ढा बारहलक्खा कुलकोडीउ हवंति खयराणं । दस लक्खा कुलकोडी पन्नत्ता थलयराणंपि ॥ ६० ॥ दस नव उरभुजसप्पे लक्खा अडवीस वणस्सईसु भवे । कमसो कोडी कुलकोडीणं सड्ढा सत्ताणवइलक्खा ॥ ६१ ॥ इत्थ य नरवर ! जोनी कुलं च इक्किक्कयं च पत्तेयं । दुहिएहिं भइयव्वं अणंतसो सव्वजीवेहिं ॥ ६२ ॥ जम्हा अणाइकालो अणाइ जीवो अणाइ कम्माइं । इय चिंतिऊण मोहो न कस्स केणावि कायव्वो ॥ ६३ ॥ जीवा कसायवसगा विसयपसत्ता पमायनिउत्ता । एगिंदियमाईसुं सहंति जोणीसु दुक्खाइं ॥ ६४ ॥ जया मोहोदओ तिव्वो, अन्नाणं खु महब्भयं । कोमलं वेयणिज्जं तु, तया एगिंदियत्तणं ॥ ६५ ॥ जं नरए नेरइया दुक्खं पावंति गोयमा ! तिक्खं । तत्तो अणंतगुणियं निगोयमज्झे मुणेयव्वं ॥ ६६ ॥ भमिओ अणंतवारं जोणीसु इमासु विविहरूवासु । जीवो जिणभणिएणं धम्मेण विवज्जिओ दुहिओ ॥ ६७ ॥ नाणाइभेयभिन्नो चउहा धम्मो जिणेहिं पन्नत्तो । निव्वाणगमणमग्गो दुग्गइगमणं निवा-

रेइ ॥ ६८ ॥ जओ—नाणं च दंसणं चेव, चरित्तं च तवो तहा । मोक्खमग्गत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ ६९ ॥ इत्यादि तद्वचः श्रुत्वा, प्रबुद्धः सागरोऽग्रहीत् । तपस्यां श्रीगुरोः पार्श्वे, प्रियाभिरष्टभिः समम् ॥ ७० ॥ अथामरनरेंद्रोऽपि, सागरेंदुसुतं निजे । पदे श्रीसूरनामानमारोप्योत्सवपूर्वकम् ॥ ७१ ॥ अर्हच्चैत्येषु सर्वेषु, निर्माप्याष्टदिनोत्सवम् । भवार्णवतरीतुल्यां, प्रव्रज्यामाददे तदा ॥ ७२ ॥ पठन्नेकादशांगानि, राजर्षिः सागरः पुनः । शुश्रावाष्टादशस्थानविचारं गुरुसन्निधौ ॥ ७३ ॥ निद्राविकथया मुक्तस्त्रिगुप्तो भक्तिमान् गुरौ । उद्युक्तश्च पठन् साधुः, सिद्धांतं विधिपूर्वकम् ॥ ७४ ॥ असंख्यभवदुष्कर्म, क्षिपते क्षणमात्रतः । यतो ज्ञानोपयोगोऽत्र, निर्जराहेतुरादिमः ॥ ७५ ॥ किंचोक्त तीर्थकृन्नामबंधस्थानेषु विंशतौ । जिनैरष्टादशस्थानमपूर्वज्ञानसंग्रहात् ॥ ७६ ॥ वाचना प्रच्छना सम्यग्, धर्माख्यानार्थचिंतनम् । कुर्वन्नपूर्वशास्त्राणां, शुभकर्मार्जयेद् दृढम् ॥ ७७ ॥ निशम्यैवं गुरोर्वाणीं, सर्वांगीणप्रयत्नवान् । सोऽप्यपूर्वश्रुतज्ञानपाठाभिग्रहमग्रहीत् ॥ ७८ ॥ प्रथमायां स पौरुष्यां, स्वाध्यायं विधिना व्यधात् । द्वितीयस्यां पुनस्तस्यां, सम्यगर्थानुचिंतनम् ॥ ७९ ॥ गुरोर्गिरा तृतीयस्यां, भक्तपानगवेषणम् । अपूर्वस्य श्रुतस्याथ, चतुर्थ्यां पाठमातनोत् ॥ ८० ॥ युग्मं ॥

इत्यपूर्वश्रुतज्ञानपाठैकोद्यतचेतसः । बिभ्रतो निरतीचारं, ज्ञानाचारं जिनाज्ञया ॥ ८१ स्वामी चमरचंचायां, अन्यदा तस्य सन्मुनेः । चमरेंद्रः स्थिरीभावमश्लाघिष्टामरसंसदि ॥ ८२ ॥ सागरेंदुमुनेः सदृग्, श्रुतज्ञानोपयोगवान् । नान्योऽस्ति भरतावन्यां, साधुः सिंधुः शमांबुनः ॥ ८३ ॥ देवो हेमांगदः श्रुत्वा, वासवस्येत्युदीरितम् । अश्रद्धानं

परं विभ्रन्मिथ्यात्वोदयदुर्मतिः ॥ ८४ ॥ जवाज्जयपुरं प्राप्य, राजर्षेर्गुरुसन्निधौ । अपूर्वापूर्वसिद्धांतपाठोद्युक्तस्य संततम् ॥ ८५ ॥ अस्वाध्यायं व्यधात्क्षोभसंरंभांश्च दिवानिशम् । प्रकीर्णकादिसूत्राणि, सोऽध्यैष्ट प्रयतः पुनः ॥ ८६ ॥ भंगशतैः श्रुताभीतो, क्षोभयामास तं सुरः । न प्रमादं परं साधुः, क्षणमात्रमपि व्यधात् ॥ ८७ ॥ ततः प्रमोदवान्नाकी, प्रत्यक्षीभूय तं मुनिम् । वंदित्वा विधिनाऽप्राक्षीत्, प्रांजलिः श्रीगुरूनिति ॥ ८८ ॥ राजर्षेः किं फलं स्वामिन्नपूर्वश्रुतपाठतः । प्राप्तवांस्तीर्थकृत्कर्मेत्यवादीत्तं गुरुः पुनः ॥ ८९ ॥ ततः केवलिनं नत्वा, सराजर्षिं सुराग्रणीः । क्षमित्वा बहुमानेन, निजं धाम जगाम सः ॥ ९० ॥ आराध्याष्टादशस्थानं, नित्यशः श्रुतपाठतः । विमाने विजये देवः, सागरेंदुरजायत ॥ ९१ ॥ ततश्च्युतो विदेहेऽसौ, प्राप्य तीर्थकरश्रियम् । सागरेंदुमुनिः श्रीमान् , सिद्धिसौधं भविष्यति ॥ ९२ ॥ अपूर्वापूर्वसिद्धांताधीतिः कार्या विवेकिना । सम्यग्दृष्टिमता शश्वत् , साधुना श्रावकेण वा ॥ ९३ ॥ राशिर्दुष्कर्मणां येन, श्रुतज्ञानोपयोगतः । क्षीयते तत्क्षणादेव, शुभैनिश्चितयशालिनः ॥ ९४ ॥ एवं निशम्य चरितं दुरितापहारि, श्रीसागरेंदुनृपतेर्गुणसागरस्य । अष्टादशे नवनवश्रुतपाठरूपे, यत्नः पदे निरुपमे मुनिभिर्विधेयः ॥ ९५ ॥ इत्यष्टादशस्थानके सागरचंद्रकथानकं संपूर्णं ॥

अथैकोनविंशतिस्थानकं—तत्र सकलश्रेयोनिदाने स्वपरोपकारितया निखिलज्ञानगरिष्ठे श्रीश्रुतज्ञाने विशुद्धाशयपूर्वकं भक्तिर्विपिना विधातव्या, श्रुतं चार्थतोऽर्हत्प्रणीतं सूत्रतस्तु गणभृदादिभिः संदृब्धं, यतः—'अत्थं भासइ अरिहा

१ अर्थं भाषतेऽर्हन् सूत्रं ग्रथ्नन्ति गणधरा निपुणं । शासनस्य हितार्थं ततः सूत्रं प्रवर्तते ॥ १ ॥

सुत्तं गुंथंति गणहरा निउणं । सासणस्स हियट्ठाए तओ सुत्तं पवत्तै ॥ १ ॥ सुत्तं [1]गणहररइयं तहेव पत्तेयबुद्धरइ-यं च । सुअकेवलिणा रइयं अभिन्नदसपुव्विणा रइयं ॥ २ ॥ तच्चांगानंगभेदैरनेकधा, अंगानि श्रीआचारांगादीनि, अ-नंगं बद्धाबद्धभेदाभ्यां द्विधा, तत्र बद्धं ( नोनिशीथं ) श्रीद्वादशांगरूपं, अबद्धं ( निशीथं ) श्रीमहानिशीथादि, तत्रांग-पदसंख्या यथा—[2]आयारंगेऽट्ठारसपदसहस्सा दुगुण दुगुण सेसेसु । बियतियचउ च्छतीसं बिसयरिलक्खे-गचोआला ॥ २ ॥ पंचमि दुलक्ख अडसी छट्ठे पण लक्ख सहस्सछस्सयरी । सत्तमि लक्खं इगार दुवन्न अट्ठमि तेवीसलक्ख चऊ ॥ ४ ॥ नवमे छचत्तलक्ख अड विणवइ लक्ख सहस सोल पय दसमे । एगारसेग-कोडी चुलसीलक्ख सहस्स बत्तीसा ॥ ५ ॥ सव्वंग पय तिकोडी लक्खा अडसट्ठि सहस बायाला । उवसग्गिअनेवा-इयनामक्खाइअमिस्सपया ॥ ६ ॥ अथ पूर्वपदसंख्या—पूर्वमुत्पादपूर्वाख्यं, पदकोटीप्रमाणकम् । द्रव्यध्रौव्यव्ययोत्पादप्र-पञ्चवर्णनात्मकम् ॥ ७ ॥ लक्षः षण्णवतिर्यत्र, पदानां तत्र हृद्ययः । वर्ण्यतेऽग्रायणीयेन, स्वमतपराऽग्रपदानि च ॥ ८ ॥ पदानां सप्ततिर्लक्षा, यत्र वर्णयति स्फुटम् । तत् श्रीवीर्यप्रवादाख्यं, वीर्यं वीर्यवतां सताम् ॥ ९ ॥ अस्तिना-

---

१ सूत्र गणधररचित तथैव प्रत्येकबुद्धरचित चा श्रुतकेवलिना रचित अभिन्नदशपूर्विणा रचित ॥ २ ॥

२ आचारांगे पदानि अष्टादश सहस्राणि शेषेषु द्विगुणद्विगुणानि।द्वितीये तृतीये चतुर्थे षट्त्रिंशत् सहस्राणि द्वासप्ततिश्चचतुश्चत्वारिंशत्सहस्राधिकैकलक्षा ॥ ३ ॥ पञ्चमे द्वे लक्षे अष्टाशीति सहस्राणि षष्ठे पंच लक्षा षट्सप्तति सहस्राणि । सप्तमे एकादश लक्षा द्विपञ्चाशत्सहस्राणि । अष्टमे त्रयोविंशतिर्लक्षाश्चत्वारि सहस्राणि॥४॥ नवमे षट्चत्वारिंशल्लक्षा अष्टसहस्राणि दशमे द्विनवति लक्षा षोडश सहस्राणि पदाना एकादशे एका कोटी चतुरशीति लक्षा द्वात्रिंशत्सहस्राणि ॥ ५ ॥ सर्वेषामङ्गानां पदानि तिस्रः कोट्योऽष्टषष्टिर्लक्षा द्विचत्वारिंशत्सहस्राणिऔपसर्गिकनैपातिकनामिकाख्यातमिश्राणि पदानि ॥ ६ ॥

रितप्रवादं च, यत् षष्टिपदलक्षम् । जीवाद्यस्तित्वनास्तित्वं, स्वपरादिभिराह तत् ॥ १० ॥ एकोनपदकोटीकं, यच्चद्र्- णयति श्रुतम् । पूर्वं ज्ञानप्रवादाख्यं, ज्ञानं पचविधं गुणैः ॥ ११ ॥ पूर्वं सत्यप्रवादाख्यं, पदकोट्येकपद्पदम् । भाषा द्वादशधा प्राह, दशधा सत्यभाषणत् ॥ १२ ॥ कोट्यः षड्विंशतिर्यत्र, पदानां परिवर्णिताः । आत्मप्रवादपूर्वेऽपि, भू- योयुक्तिपरिग्रहैः ॥ १३ ॥

तत्र कर्तृत्वभोक्तृत्वनित्यताऽनित्यतादयः । आत्मधर्मा निरूप्यंते, तद्भेदाश्च सयुक्तिकाः ॥ १४ ॥ माशीति पदल- क्षैकपदकोटीप्रमाणकम् । पूर्वं कर्मप्रवादाख्यं, कर्मबंधस्य वर्णकम् ॥ १५ ॥ लक्षाश्चतुरशीतिश्च, पदानां यत्र वर्णिताः । पूर्वं नवममाख्यातं, प्रत्याख्यानं तदाख्यया ॥ १६ ॥ प्रतिमाप्रातिम तत्र, द्रव्यभावसमाश्रयम् । प्रत्याख्यानं तदाख्यातं, यश्च प्रामाण्यवर्द्धनम् ॥ १७ ॥ कोटी च दश लक्षाश्च, यत्पदानां प्रवर्तिताः । तत्सद्विद्याप्रवादाख्यं, पूर्वं दशममुच्यते ॥ १८ ॥ लघ्वयोऽङ्गुष्ठसेनाद्या, विद्याः सप्त शतानि च । रोहिण्याद्या महाविद्याः, प्रोक्ताः पंच शतानि च ॥ १९ ॥

कोट्यः षड्विंशतेर्यत्र, पदानां सुप्रतिष्ठिताः । कल्याणनामधेयं तत्, पूर्वमन्वर्थनामकम् ॥ २० ॥ ज्योतिर्गण- स्य विस्तारं, त्रिषष्टिपुरुषाश्रितम् । सुरासुरस्य कल्याणं, वर्णयंति सुविस्तरम् २॥ १ ॥ यत्त्रयोदशकोटीभिः, पदानां संप्रधिष्ठितम् । प्राणावायाख्यपूर्वं तत्, प्राणानां द्वादशं परम् ॥ २२ ॥ यत्र कायचिकित्सादिरायुर्वेदोऽष्टधोदितः । प्राणायामविभागादिभूतकर्मविधिस्तथा ॥ २३ ॥ क्रियाविशालपूर्वं तु, नवकोटीप्रमाणकम् । छंदःशब्दादिशास्त्राणि, तत्र शिल्पकला गुणाः ॥ २४ ॥ पंचाशत्पदलक्षाणि, कोट्यो द्वादश यत्र च । पूर्वं चतुर्दशे लोकबिंदुसारे तु तत्र च ॥ २५ ॥

अक्षरादिविशिष्टव्यञ्जनादिविधिस्तथा । परिकर्मविधिः प्रोक्तः, समस्तश्रुतसंपदाम् ॥ २६ ॥ इत्यादि श्रीजिनागमस्य द्रव्यभावाभ्यां द्विप्रकारा भक्तिः, तत्राद्या श्रीजिनागमहृद्यपुस्तकलेखननानाविधज्ञानोपकरणनिर्माणादिना श्रुतवतां वस्त्रपात्र पुस्तकदानविशुद्धान्नपानार्पणविश्रामणाभ्युत्थानबहुमानदानादिना च भवति, एषाऽपि सम्यग्भावागतया महते लाभाय भवति, यतः—पुस्तकेषु विचित्रेषु, श्रीजिनागमलेखनम् । तत्पूजावस्तुभिः पुण्यैर्द्रव्याराधनमुच्यते ॥ २७ ॥ पापामयौषधं शास्त्रं, शास्त्रं पुण्यनिबंधनम् । चक्षुः सर्वत्रगं शास्त्रं, शास्त्रं सर्वार्थसाधनम् ॥ २८ ॥ लौकिका अप्याहुः—यावदक्षरसंख्यानं, लिखने शास्त्रपंचके । तावद्वर्षसहस्राणि, स्वर्गे विद्याप्रदो भवेत् ॥ २९ ॥ श्रीजिनागमपूजेयं, भवजाड्यविघातिनी । केवलज्ञानजननी, कृता भवति भाविनाम् ॥ ३० ॥ भावभक्तिस्तु विधिना श्रीजिनागमपठनपाठनतदर्थविलोकनवाचनदानतत्पुस्तकलिखनशोधनजीर्णोद्धारादिना भवति, यतः—श्रवणं श्रद्धानं च, पठनं पाठनं तथा । तद्विदां बहुमानश्च, भावभक्तिः प्रकीर्तिता ॥ ३२ ॥ क्रियते येन निर्व्याजं, द्रव्यभावप्रकारतः । श्रुतज्ञानस्य सद्भक्तिः सम्यग् श्रुतवतां तथा ॥ ३३ ॥ तीर्थकरैश्वर्य, मोदते मुक्तिसंपदा । असौ विश्वातिशायिन्या, रत्नचूडनरेंद्रवत् ॥ ३४ ॥ युग्मं ॥ तथाहि—अस्ति स्व भरतक्षेत्रे, पवित्रे जैनवेश्मभिः । ताम्रलिप्तीपुरी पौरगुणसौरभशालिनी ॥ ३५ ॥ यस्यामुन्नतवंशाढ्याः, करिणो व्यवहारिणः । मदवारिश्रियोपेताः, श्रयंति संपदं सदा ॥ ३६ ॥ रत्नशेखरनामाऽऽसीत्तस्यां राजा कलालयः । श्रीमान् कुवलयोल्लासी, सदा मृदुकरस्थितिः ॥ ३७ ॥ प्रिया रत्नावली तस्य, बभूव गुणसंश्रया । धनुर्लतेव सद्वंशा, नम्रदाकारधारिणी ॥ ३७ ॥ तयोः सूनुरनूनश्री, रत्नचूडाभिधोऽजनि । निजोदयेन

यः सोमवंशलक्ष्मीमभूषयत् ॥ ३८ ॥ वर्द्धमानः क्रमात्प्राप्ययौवने सहकारवत् । सच्छायतनुसौरभ्यप्रीणिताखिलरघूयम्
॥ ३९ ॥ सुमतिः सुमतिस्तस्य, सुबुद्धेर्मंत्रिणः सुतः । श्रीपुंजसार्थवाहस्य, नंदनो मदनस्तथा ॥ ४० ॥ नैगम-
श्रीधरस्यापि, गजो नामांगजोऽरजाः । अभूवन् सुहृदो देहच्छायावत्सहचारिणः ॥ ४१ ॥ युग्मं ॥ तुल्यांगभोगशृंगारा-
स्तुल्यसौभाग्यसंपदः । न कस्य विस्मयं कुर्युस्ते पुनर्निजलीलया ॥ ४२ ॥ उद्याने तेऽन्यदा प्रापुर्निष्पापस्वांतवृत्तयः
। समीपे सिंहसूरीणां, विज्ञातजिनशासनाः ॥ ४३ ॥ वरस्य पंचकं दाक्ष्यं, सौंदर्यं शतिकं पुनः । बुद्धिः साह-
स्रिकी पुण्यं, शतसाहस्रिकं विदुः ॥ ४४ ॥ श्रुत्वेति श्लोकमस्तोकविस्मयास्तत्परीक्षणे । चलिताः कलितोत्साहा,
विदेशं प्रति सत्वरम् ॥ ४५ ॥ त्रिभिर्विशेषकं ॥ चत्वारोऽपि व्रजंतस्ते, सुहृदः सौहृदोज्ज्वलाः । अगृहीतात्मपाथे-
याः, मथयंतः कथाः पथि ॥ ४६ ॥ नानावनफलाहारैः, सृजंतः प्राणधारणम् । आयाताः कुत्रचिद् ग्रामेऽभिरामे
दशभिर्दिनैः ॥ ४७ ॥ युग्मं ॥ लब्धलक्षे कलादक्षं, जगुस्ते श्रेष्ठिनंदनं । त्वयाऽत्र भोजनं देयं, निजचातुर्यसंपदा
॥ ४८ ॥ मध्येग्रामं ततः प्राप्य, श्रेष्ठिसूश्चतुराग्रणीः । प्रणम्य श्रीजिनाधीशप्रतिमाश्चैत्यसंस्थिताः ॥ ४९ ॥ जरीयसो
महेभ्यस्य, कस्मिंश्चित्पर्ववासरे ॥ कस्यचिद्वणिजो भूयोग्राहकाकुलचेतसः ॥ ५० ॥ लघुहस्ततया दत्त्वा, साहाय्यं
छ्यतां विना । चतुर्णां भोजनं भव्यं, पंचद्रम्मव्ययाद्ददौ ॥ ५१ ॥ त्रिभिर्विशेषकं ॥ द्वितीयेऽहनि सार्थेशतनयो
विनयोदधिः । अनंगाभंगसौंदर्यवर्यश्चारुस्तुतद्युतिः ॥ ५२ ॥ ग्रामांतः प्राप्य दुष्प्रापरूपसौभाग्यसंपदा । विस्मापयन्
जनं सर्वं, तस्थौ वेश्यागृहावनौ ॥ ५३ ॥ युग्मं ॥ सोऽनंगसेनया पण्यांगनयाऽथ सगौरवम् । आनीय सरसैर्भोज्यै-

भोजितस्तैः समं गृहे ॥ ५४ ॥ तेषां सद्भोजनस्थानविलेपनमुखैः सुखैः । सा तद्रूपविमोहेन, शतद्रव्यव्ययं व्यधात् ॥ ५५ ॥ तृतीयेऽथ दिने पुत्रो, मंत्रिणः प्रतिभान्वितः । काञ्चनाख्यपुरे प्रापत्तदादेशेन शुक्रपे ॥ ५६ ॥ तत्र राजगृहे प्राप्तः, सभामध्ये निषेदुषाम् । संवादं श्रुतवानेवं, जायमानं परस्परम् ॥ ५७ ॥ तद्यथा—

को देवः शिवदायी ? कश्च गुरुर्भवसमुद्रसेतुसमः ?। को धर्मो विश्वहितः ? सर्वेषां किं प्रियं परमम् ? ॥५८॥ श्रुत्वैवं नृपतिः स्माह, तानिति प्रददाति यः । अस्योत्तरं कियत्तस्य, भवद्भिर्दीयते धनम्? ॥५९॥ तैरुचे दीयते द्रम्मसहस्रं तस्य तत्क्षणम् । ततो मंत्रिसुतोऽवादीददीनवदनद्युतिः ॥ ६० ॥ देवोऽर्हन् शिवदायी निर्ग्रंथगुरुश्च भवति भवभेदी। धर्मः प्राणिषु करुणा जीवितमिह वल्लभं परमम् ॥ ६१ ॥ निशम्येति समस्यां तां, मंत्रिपुत्रेण पूरिताम् । तदा संवादमासाद्य, तत्पुण्येन नभोगिरा ॥ ६२॥ हेमप्रभप्रजापालादेशान्मुदितमानसः । ततस्तस्मै ददुर्द्रम्मसहस्रं ते मुदा रयात् ॥६३॥ युग्मं॥ तस्मिन् दिनेऽभवत्तेषां, सर्वेषां तद्धनव्ययात् । सर्वांगभोगसामग्री, कीर्त्तिर्दानपुरस्सरम् ॥ ६४ ॥ चतुर्थे दिवसे प्रोचुः, सुहृदस्ते नृपात्मजम् । त्वयाऽद्य भोजनं देयमस्माकं सुखसाधकम् ॥ ६५ ॥ अनाकर्ण्येव तद्वाचं, तस्थौ मौनेन राजसूः । चक्रे नोपक्रमं किंचिद्भोजनानयनाय च ॥ ६६ ॥ धर्मो जयति सर्वत्रेत्युक्त्वाऽशोकतरोस्तले । तत्रैव च पुरोपान्ते, सुष्वाप सुखनिद्रया ॥ ६७ ॥ तस्मिन्नेव दिने दैवादपुत्रेऽथ मृते नृपे । अभिषिक्तः पंचदिव्यै, रत्नचूडः शुभोदयात् ॥ ६८ ॥ राज्येऽनेकसुखप्राज्ये, न्यवेश्यानंदसंपदि । प्राक्तनं सुकृतं जंतोर्यतः सर्वातिशायकम् ॥ ६९ ॥

समयासार्षीत् केवलज्ञानभानुमान्, ॥ ८४ ॥ तमानंतुं समायासीन्, रत्नचूडो नृपाग्रणीः । विद्वद्भिस्तैः समं श्रीमान्, पौरश्रेणीसमन्वितः ॥ ८५ ॥

सुरैर्विनिर्मिते हैमकमले विमलप्रभे । आसीनः स मुनिर्धर्मं, पुरस्तेषां न्यवेदयत् ॥ ८६ ॥ लक्ष्मी रूपं श्रुतं शीलं, विवेको विनयः शमः। औदार्यं नाप्यते चाल्पपुण्यैरित्यद्भुताष्टकम् ॥ ८७ ॥ यो धीमान् कुलजः क्षमी विनयवान् सत्यव्रतः शीलवान्, स्वैश्वर्ययुतो दयालुहृदयः श्रीमान् शुचिः सत्रपः । सद्भोगी गुरुदेवभक्तिकलितो दाता कृतज्ञः कृती, सौजन्यस्य गृहं नृजन्म सफलं तस्येह चामुत्र च ॥ ८८ ॥इत्यादिदेशनाप्रांते, गुरुः पृष्टो महीभुजा । जिनेंद्रैः प्राकृते स्वामिन्नागमो निर्ममे कुतः? ॥ ८९ ॥ उवाच केवलज्ञानी, सुखोच्चारार्थमंगिनाम् । सत्यर्द्धमागधी-भाषारूपाः श्रीअर्हतो गिरः ॥ ९० ॥ यतः—

बालस्त्रीमंदमूर्खाणां, नृणां [१] चारित्रकांक्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धांतः प्राकृतः कृतः ॥ ९१ ॥ अनंतार्थं वचः सर्वं, जिनेंद्रागमसंगतम् । अगोचरं सदा पुंसां, मिथ्यात्वांधितचेतसाम् ॥ ९२ ॥ नो पात्रं परमार्हतोऽस्ति सुकृतं नान्यज्जिनेंद्रार्चनादौचित्याचरणाद्गुणोऽस्ति परमो बंधुर्न धर्मात्परः। नान्यः कर्मरिपो रिपुस्त्रिभुवने



१ चारित्रशब्देन चारित्रशुद्धिर्ग्राह्या, तथा चात्तचारित्राणां तस्याध्येयः सिद्धान्त इति फलितोऽर्थः; स्वरूपविशेषणं चेद, अन्यथा प्राप्तचारित्रशुद्धीनां यथाश्रुतार्थत्वे च प्राप्तचारित्राणां न योग्यता स्यात् सिद्धान्तपाठस्य, चारित्रं चात्र देशसर्वान्यतमविरतिरूपं आवश्यकादीनामंगोपांगादीनां प्राकृतत्वात्, योग्यता चागमानुसारिण्यत्र न स्वकल्पिता ।

रत्नचूडस्ततो जज्ञे, राजा राजन्यपूजितः । सुमतिस्तस्य मंत्री च, राज्यभारधरोऽजनि ॥ ७० ॥ काशीधिपपदं सार्थवाहसूनोर्ददौ नृपः । श्रेष्ठिसूनोः पुनः श्रेष्ठिपदवीं प्रौढसंपदम् ॥ ७१ ॥ तत्र ते सत्यतानीतगाथार्थाः प्रभुताजुषः । धर्ममेवोत्तमं लोके, मेनिरेऽखिलवस्तुषु ॥ ७२ ॥ स्वसंपत्संविभागेन, यः परेषूपकारकः । देवेभ्योऽपि गरीयांसं, तं पुमांसं जगुर्जनाः ॥ ७३ ॥

इत्यालोच्य स्वयं धीमान्, धर्मज्ञः पृथ्वीपतिः । संपदं स ददौ शश्वत्, सर्वेषां सुकृतात्मनाम् ॥ ७४ ॥ युग्मं ॥ रत्नशेखरभूभर्ता, रत्नचूडं निजांगजम् । श्रुत्वाऽथ प्राप्तसाम्राज्यं, कांचनादिपुरे पुरे ॥ ७५ ॥ आजूहवत् सुहृद्युक्तं, शिवशर्मपुरोधसा । पितुरादेशमासाद्य, सोऽपि तत्राययौ जवात् ॥ ७६ ॥ रत्नचूडं ततो न्यस्य, स्वराज्ये रत्नशेखरः । स्वीचक्रे नृपतिश्चंगां, संवेगात्संयमश्रियम् ॥ ७७ ॥ रत्नचूडनरेंद्रस्य, शूरसोमाह्वयौ सुतौ । अजायेतां जगत्पूज्यौ, ज्यायोधर्मनयश्रिया ॥ ७८ ॥ शूरस्य प्रददौ यौवराज्यं तत्र पदं नृपः । कांचनादिपुरे सोमं, नृपश्रीदयितं व्यधात् ॥ ७९ ॥ अन्येद्युः सुधियस्तत्र, संगता नृपसंसदि । मिथ्यादृशो व्यधुः शास्त्रविचारं स्थूलमेधसः ॥ ८० ॥ वेदस्मृतिपुराणादिशास्त्राणि निखिलान्यपि । श्रूयंते संस्कृतान्येव, श्रेयोऽर्थं सर्वधीमताम् ॥ ८१ ॥ नानागमान्विता जैनागमाः प्राकृतभाषया । दुर्गमाः संति सर्वेषां, न तत्पाठस्ततः शिवः ॥ ८२ ॥ मिथ्यादृग्भिर्मितामेवं, निंदां श्रुत्वा जिनागमे । किंचिद्दूनमना मौनी, तस्थौ राजा स तत्त्ववित् ॥ ८३ ॥ तस्मिन्नवसरे तत्रामरचंद्रमुनिश्वरः । उद्याने

समवासार्षीत् केवलज्ञानभानुमान, ॥ ८४ ॥ तमानंतुं समायासीत्, रत्नचूडो नृपाग्रणीः । विद्वद्भिस्तैः समं श्रीमान्, पौरश्रेणीसमन्वितः ॥ ८५ ॥

सुरैर्विनिर्मिते हैमकमले विमलप्रभे । आसीनः स मुनिर्धर्मं, पुरस्तेषां न्यवेदयत् ॥ ८६ ॥ लक्ष्मी रूपं श्रुतं शीलं, विवेको विनयः शमः। औदार्यं नाप्यते चाल्पपुण्यैरित्यद्भुताष्टकम् ॥ ८७ ॥ यो धीमान् कुलजः क्षमी विनयवान् सत्यव्रतः शीलवान् , रूपैश्वर्ययुतो दयालुहृदयः श्रीमान् शुचिः सत्रपः । सद्भोगी गुरुदेवभक्तिकलितो दाता कृतज्ञः कृती, सौजन्यस्य गृहं नृजन्म सफलं तस्येह चामुत्र च ॥ ८८ ॥इत्यादिदेशनाप्रांते, गुरुः पृष्टो महीभुजा । जिनेंद्रैः प्राकृते स्वामिन्नागमो निर्ममे कुतः? ॥ ८९ ॥ उवाच केवलज्ञानी, सुखोच्चारार्थमंगिनाम् । संत्यर्द्धमागधीभाषारूपाः श्रीअर्हतो गिरः ॥ ९० ॥ यतः—

बालस्त्रीमंदमूर्खाणां, नृणां [१] चारित्रकांक्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धांतः प्राकृतः कृतः ॥ ९१ ॥ अनंतार्थं वचः सर्वं, जिनेंद्रागमसंगतम् । अगोचरं सदा पुंसां, मिथ्यात्वांधितचेतसाम् ॥ ९२ ॥ नो पात्रं परमार्हतोऽस्ति सुकृतं नान्यज्जिनेंद्रार्चनादौचित्याचरणाद्गुणोऽस्ति परमो बंधुर्न धर्मात्परः। नान्यः कर्मरिपो रिपुस्त्रिभुवने

१ चारित्रशब्देन चारित्रशुद्धिर्ग्राह्या, तथा चात्तचारित्राणां तस्याध्येयः सिद्धान्त इति फलितोऽर्थ, स्वरूपविशेषण चेद, अन्यथा प्राप्तचारित्रशुद्धीनां यथाश्रुतार्थत्वे च प्राप्तचारित्राणां न योग्यता स्यात् सिद्धान्तपाठस्य, चारित्रं चात्र देशसर्वान्यतमविरतिरूपं आवश्यकादीनामङ्गोपांगादीनां प्राकृतत्वात्, योग्यता चागमात्तिय नुसारिण्यत्र न स्वकल्पिता ।

ज्ञानान्न चक्षुः परं, सिद्धांतान्न परं गभीरममृतं नान्यद्गुरोर्भाषितात् ॥ ९३ ॥ ततः सर्वविदा तेन, मुनिना ते म-
नीषिणः । नृपाभिप्रायतः पृष्टा, रूपं लोकस्य तद्यथा ॥ ९४ ॥ नित्यो वाऽस्त्यथवाऽनित्यो, लोकोऽयं सचराचरः ।
नित्यश्चेत्केन रूपेणाऽनित्यो वेति निगद्यताम् ॥ ९५ ॥ असमर्थाः परं तस्य, दातुं प्रतिवचस्तदा । विद्वांसस्ते ब-
भूवांसः, सम्यग्दृष्टिशुभाशयाः ॥ ९६ ॥

आदिदेश मुनिस्वामी, ततस्तेषामपि स्फुटम् । श्रुतभक्तिः श्रियो मूलमर्हतास्त्रिजगद्गुरोः ॥ ९७ ॥ ज्ञानानामिह सर्वेषां,
श्रुतज्ञानं गुरु स्मृतम् । स्वपरावबोधकारि, प्रदीप इव विश्वगम् ॥ ९८ ॥ आधारो द्विविधस्यापि, धर्मस्याऽऽर्हत-
शासने । अंगोपांगमयं सम्यग्, श्रुतज्ञानं निगद्यते ॥ ९९ ॥ यतः—मोहं धियो हरति कापथमुच्छिनत्ति, संवेगमुन्नमयति
प्रशमं तनोति । स्वर्गापवर्गपदवीमुदमाननोति, जैनं वचः श्रवणतो किमु नो तनोति ? ॥ १०० ॥ न ते नरा दुर्गति-
*माप्नुवंति, न मूकतां नैव जडस्वभावम् । न चांधतां बुद्धिविहीनतां च, पठंति भक्त्याऽऽगममार्हतं ये ॥ १ ॥*
श्रुतस्याशातनां कुर्वन्, प्राणी प्राप्नोति दुर्गतिम् । सम्यग् तद्बहुमानेन, जगत्पूज्यं पदं पुनः ॥ २ ॥ इत्याकर्ण्य स-
कर्णात्मा, केवलज्ञानिनो गिरः । रत्नचूडोऽवनीनेता, श्रुतभक्तिव्रतं ललौ ॥ ३ ॥ द्रव्यभावप्रकाराभ्यां, श्रुतभक्तिं ततो
नृपः । विधिना विदधे नित्यं, क्लिष्टाष्टकविघातिनीम् ॥ ४ ॥ श्रुतज्ञानवतां श्रद्धां, वस्त्रपात्रान्नदानतः । वितन्वानो
नृपो भक्तिं, विरराम नहि क्वचित् ॥ ५ ॥ ततो विशेषतः श्रौतज्ञानभक्तिचिकीर्षया । राज्ये न्यस्य सुतं ज्येष्ठं शूर-

नामानमात्मपित् ॥ ६ ॥ अमरेंद्रगुरोः पार्श्वे, रत्नचूडनरेश्वरः । तपस्यामात्मसात्कृत्य, समाधिं भेजिवान् पराम् ॥८॥ पठित्वैकादशांगानि, सूत्रार्थोभययोगतः । गीतार्थोऽजनि राजार्षिरादर्श इव निर्मलः ॥ ९ ॥ यावज्जीवं मया कार्या, श्रुतभक्तिः स्वशक्तितः । इत्यभिग्रहमुर्वीशमुनिश्चक्रे दृढं हृदि ॥ १० ॥ सततं बहुमानेन, श्रुताधारेषु साधुषु । श्रुतेष्वधीतिष्वध्यापकेष्वपि भावशुद्धितः ॥ ११ ॥ वस्त्रान्नपानभैषज्यादिभिर्भक्तिं वितन्वतः । मुनेस्तस्यागमत्कालः, कियान्मुदितचेतसः ॥ १२ ॥ सोऽन्यदा गुरुभिः साकं, श्रुतभृद्भक्तिभावितः। भारतीपत्तने प्रापन्मुनिर्गुप्तमिंद्रियः ॥ १३ ॥ विप्ररूपं विनिर्माय, कौतुकादेव मायया । ईशानेंद्रः सुरस्वामी, पुरे तस्मिंस्तदाऽऽगतः ॥ १४ ॥ श्रुतभक्तिपवित्रस्य, तस्याशयपरीक्षणम् । प्राकृतत्वादिदोषाणां, कथनेन विनिर्ममे ॥ १५ ॥ युग्मं ॥ प्राकृतं सुकृतव्रातघाति प्रातरुदीरितम् । तेन जैनागमस्याहो, पाठः श्रेयान्न तेऽधुना ॥ १६ ॥ श्रुत्वेत्यासीन्मनाग् नास्य, श्रुतभक्तावनादरः । श्रुतवत्सु मुनींद्रेषु, नावहेला च चेतसि ॥ १७ ॥ शमैकगर्भया वाचा, तमुवाच यतिस्ततः । मा पापं चिनु भो विप्र !, श्रीजिनागमनिंदया ॥ १८ ॥ अंधतां मूकतां तीव्रां, हीनयोनिं च दुर्गतिम् । सिद्धांतावर्णवादेन, व्रजंति प्राणिनो द्विज ! ॥ १९ ॥ आशातना जिनेंद्राणां, तद्गिरां वा विकत्थनाम् । मिथ्यात्वमूलबीजाभां, दत्ते दुःखपरंपराम् ॥ २० ॥

[1] तित्थयरं पवयणसुयं आयरियं गणहरं महड्ढियं । आसायंतो बहुसो अणंतसंसारिओ होइ ॥ २१ ॥ कुर्वन्नाशातनामर्हद्वाचां सत्यसुधामुचाम् । प्राप्नुयादधिकं पापमाचार्यादेर्वधादपि ॥ २२ ॥ महामोहतमोऽन्धानां, भ्रमतां भववर्त्मनि



---

[1] तीर्थंकर प्रवचन श्रुत आचार्य गणधरं महर्द्धिक आशातयन् बहुशोऽनन्तसंसारिको भवति ॥ २१ ॥

। श्रीजिनागमदीपोऽयं, प्रकाशं कुरुतेऽङ्गिनाम् ॥ २३ ॥ यतः—[१] अंधयारे दुरुत्तारे, घोरे संसारसागरे । एसो चेव महादीवो, लोयालोयविलोअणो [२] एसो नाहो अणाहाणं, सव्वभूआण भावओ। भाववंधू इमो चेव, सव्वसुक्खाण कारणं ॥ २४ ॥ इत्यादि तद्वचः श्रुत्वा, श्रुतभक्तिप्रायसत्वम् । ईशानेंद्रस्ततो हृष्टः, प्रादुरासीन्महोदयः ॥ २५ ॥

त्रिः परीयाथ राजर्षि, प्रणम्य परमादरात् । वज्री विज्ञपयामास, प्रांजलिर्मुनिनायकम् ॥ २६ ॥ निर्णिक्तां त्वत्ता तेन, श्रुतस्य बहुमानताम् । साधुना किं फलं लेभे, दुर्लभं भवकोटिभिः ?॥ २७ ॥ गुरुः स्माह सुरस्वामिंस्तीर्थकृत्पदमद्भुतम् । श्रुतभक्त्यनुभावेन, समासादि महात्मना ॥ २८ ॥ निशम्येति सुरस्वामी, सगुरुं तं मुनिं ततः । वंदित्वा स्वपदं प्रापत्, तद्गुणश्रेणिभाविनः ॥ २९ ॥ एकोनविंशमाराध्य, स्थानं राजर्षिरात्मवित् । प्राणते त्रिदशो विंशत्युदध्यायुरजायत ॥ ३० ॥ ततश्च्युतो, विदेहेऽसौ, प्राप्य तीर्थकरश्रियम् । रजोराजीविमुक्तात्मा, मुक्तिमेष्यति शाश्वतीम् ॥ ३१ ॥ श्रीरत्नचूडावनिपालवृत्तं, श्रुत्वेति सम्यग्श्रुतभक्तिसारम् । एकोनविंशं विधिना विदध्वं, स्थानं निदानं, जिनराजलक्ष्म्याः ॥ ३२ ॥ इति श्रीश्रुतभक्तिरूपैकोनविंशतिस्थानकाधिकारे श्रीचंद्रनरेंद्रकथानकं समाप्तम् ॥

अथ विंशतिस्थानकाधिकारः—परमपदशाश्वतसुखप्राप्त्यवंध्यबोधिबीजरूपसम्यग्दर्शनानर्घ्यरत्ननैर्मल्यकारिश्रीमदर्हत्रिकालपूजापुरस्सरपंचशक्रस्तवदेववंदनादिविधितत्परेण श्रमणेन श्रावकेण वा विश्वत्रयपावने श्रीसर्वज्ञशासने निर्मिता-



१ अन्धकारे दुरुत्तारे घोरे संसारसागरे । एष चैव महादीपः ( द्वीपः ) लोकालोकविलोकनः ॥ २३ ॥
२ एष नाथोऽनाथानां सर्वभूतानां भावतः । भावबन्धुरयमेव सर्वसौख्यानां कारणं ॥ २४ ॥

खिलजंतुजातानंदाविर्भावना प्रभावना विधेया, यतः—[1]अलद्धपुव्वंमि भवोदयंमि, लहंति तित्थस्स पभावणाए । तित्थेसरत्तं अमरिंदपूज्जं, दसारसीहो इव सेणिओ वा ॥ १ ॥ सा च जिनेंद्रप्रासादप्रौढप्रतिमातीर्थयात्रास्नात्रोत्सवाचार्यादिपदप्रतिष्ठाप्रौढसाधर्मिकवात्सल्यशासनप्रत्यनीकोच्छेदनादिनानाविधलब्धिदर्शनादिप्रौढपुण्यकार्यकरणैर्भवति, तथा जिनेंद्रशासने अष्टधा प्रभावका भवंति, यतः—

[2]पावयणी धम्मकही वाई नेमित्तिओ तवस्सी य । विज्जा सिद्धे अ कवी अट्ठेव पभावगा भणिया ॥ १ ॥ प्रभावनां यो जिनशासनस्य, करोति पुण्योत्सवकारिकार्यैः । मेरुप्रभोर्वीपतिवत्प्रतिष्ठां, प्राप्नोत्यसौ विश्वजनार्चनीयाम् ॥ २ ॥ तथाहि भरतक्षेत्रे, पुरे सूर्यपुराभिधे । अरीणां दमनोजस्वी, राजाऽरिदमनोऽजनि ॥ ३ ॥ तस्याग्रमहिषी जज्ञे, नाम्ना मदनसुंदरी । तयोः सूनुरभून्मेरुप्रभो मेरुरिवोन्नतः ॥ ४ ॥ प्राणेभ्योऽपि प्रिया राज्ञः, पराऽऽसीद्रत्नमंजरी । तदंगजो महासेननामा धामाधिकः पुनः ॥ ५ ॥ पापपात्रेण तन्मात्रा, स्वसूनो राजलिप्सया । धात्र्याऽदायि रहो मेरुप्रभस्य विषमं विषम् ॥ ६ ॥ परं पुण्योदयात्तस्मै, तत्स्वरूपं निवेद्य सा । विषं नैव ददौ दैवं, प्रायो जागर्त्ति देहिनाम् ॥७॥

यतः—वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा, रक्षंति पुण्यानि पुरा कृतानि ॥ ८ ॥ अपरं रूपमादाय, ततोऽञ्जनप्रयोगतः । असिपाणिः सुधीर्मेरुप्रभो देशांतरं ययौ ॥ ८ ॥ प्रतीच्यां स

१ अलब्धपूर्वे भवोदके लभन्ते तीर्थस्य प्रभावनया । तीर्थेश्वरत्वममरेन्द्रपूज्यं दशारसिंह इव श्रेणिक इव वा ॥ १ ॥

२ प्रावचनिको धर्मकथको वादी नैमित्तिकस्तपस्वी च विद्यासिद्ध. मन्त्रसिद्धश्च कविरष्टैव प्रभावका भणिताः ॥ ३ ॥

व्रजन् प्रापत्क्रमाच्छांतिपुरं पुरम् । तन्मध्ये चार्हतश्चैत्यं, श्रीशांतिः कांतिभासुरम् ॥ ९ ॥ प्रविश्य विधिना तत्र, पवित्रः पुण्यवारिणा । आनर्च प्रतिमां तस्य, पुष्पैः सौरभधारिभिः ॥ १० ॥ प्रणिपत्य ततो भक्त्या, विचित्रस्तोत्रपाठतः । स्तौति स्म विस्मितस्वांतः, प्रतिमां तां कृतांजलिः ॥ ११ ॥ ततोऽसौ जगतीशोभां, बहिरेत्य विलोकयन् । ददर्शाभयघोषाख्यं, यतींद्रं दुरितापहम् ॥ १२ ॥ तं प्रणम्य क्षमानाथ, स क्षमायां तदंतिके । निविष्टः शुश्रुवे धर्मं, शर्मद्रुमसुधास्रवम् ॥ १३ ॥ यथा—जिणधम्मो अ जीवाणं, अपुव्वो कप्पपायवो । सग्गापवग्गसुक्खाणं, फलाणं दायगो जए ॥१४॥ अहवा चिंतामणी एसो, सव्वत्थ सुहदायगो । निहाणं सव्वसुक्खाणं, धम्मो सव्वन्नुदेसिओ ॥ १५ ॥ धम्मेण धणमणंतं धम्मेण नरामरिंदवरकामा । धम्मेण होइ मुक्खो तम्हा धम्मुज्जमं कुणह ॥ १६ ॥ इत्याख्याय गुरुः श्राद्धवर्गायेति न्यवेदयत् । द्रव्यतीर्थकरः क्षोणीपालसूनुरयं महान् ॥ १७ ॥ भविष्यति जिनेंद्रस्य, शासनस्य प्रभावकः । ततः संगोप्य युष्माभी, रक्षणीयोऽत्र कुत्रचित् ॥ १८ ॥ युग्मं ॥ समेष्यति कियत्सैन्यमस्योपद्रवहेतवे । प्रेषितं परमा मात्रा, सांप्रतं पापरूपया ॥ १९ ॥ गुरोर्गिरा ततो गुप्तीकृत्य भूमिगृहे निज । तं ररक्षार्हतः श्रीमान्, श्रेष्ठिमुख्यो धनेश्वरः ॥ २० ॥ मध्याह्नेऽथ समागत्य, कियत्सैन्यं सुदुर्दलम् । संशोध्य नगरे तत्र, तं जगाम यथाऽऽगतम् ॥ ११ ॥ प्रीतो मेरुप्रभः प्रोचे, नमस्कृत्य ततो गुरुम् । श्रीप्रतीक्ष्यप्रसादेन, भवतां भवतारिणाम् ॥ २१ ॥



२ जिनधर्मश्च जीवानामपूर्व कल्पपादप । स्वर्गापवर्गसौख्यानां फलानां दायको जगति ॥ १४ ॥ अथवा चिन्तामणिरेष सर्वत्र सुखदायक । निधानं सर्वसौख्यानां धर्म. सर्वज्ञदर्शित ॥ १५ ॥ धर्मेण धनमनन्तं धर्मेण नरामरेन्द्रवरकामा । धर्मेण भवति मोक्षस्तस्मात् धर्मोद्यमं कुरुत ॥ १६ ॥

जीवितं मयका लेभे, जीवानां वल्लभात्वधिः । तदानृण्यमहं कर्त्तुं, नालं वो विश्वतायिनाम् ॥ २२ ॥ गुरुराख्यन्महाभाग !, तदानृण्यं भवेत्तव । विधत्से त्वं यदा धर्मं, शुद्धं सद्दर्शनान्वितम् ॥ २३॥ यः प्राप्य सम्यग् जिनधर्ममार्गं, प्रभावयत्यद्भुतपुण्यकार्यैः । असौ कृतज्ञः सुकृतांगभाजां, वात्सल्यमुच्चैर्विदधेऽखिलानाम् ॥ २४ ॥ यतः—धर्मादाधिगतैश्वर्यः, सेवते धर्ममेव यः । सत्य शुभायतिर्भावी, स कृतज्ञशिरोमणिः ॥ २५ ॥ द्विविधस्यापि धर्मस्य, ततो निर्वृतिदायिनः । पृच्छन् स्वरूपं श्री मेरुप्रभस्तत्रैव तस्थिवान् ॥ २६ ॥ अथारिदमनो राजा, रुजाक्रांततनुः सुतम् । तत्रस्थं तं समाहूय, सत्याभिज्ञानपूर्वकम् ॥ २७ ॥

मातुर्मनःप्रमोदाय, महासेनाय दीपनाम् । राज्यं तत्सेवकोऽस्मीति, वदंतमपि निर्निभम् ॥ २८ ॥ तं कृतोत्सवसंभारमभिषिच्य पदे निजे । यौवराज्ये महासेनपुत्रं तं प्रवरप्रभम् ॥ २९ ॥ समशीलदयादानैः, पंचाश्रवनिरोधवान् । स्वजन्म सफलीकृत्य, स्वर्गलोकमशिश्रियत् ॥ ३० ॥ चतुर्भिः कलापकं ॥ मेरुप्रभमहीजानिः, कुरुराजनृपात्मजाम् । उपयेमे मनोहारिरूपां त्रैलोक्यसुंदरीम् ॥ ३१ ॥ निश्छद्मौचित्यसौंदर्यवर्यया प्रियया तया । कल्पद्रुः कल्पवल्ल्येव, सर्वतः शुशुभेतराम् ॥ ३२ ॥ अन्यदैश्वर्यसौंदर्यलीलां विश्वातिशायिनीम् । आलोक्यासूयया माता, ज्वलंती रत्नमंजरी ॥ ३३ ॥ हेमार्पणवशीभूतमालाकारेण केनचित् । मध्ये कुसुममालाया, निर्मायागम्यमायया ॥ ३४ ॥ विषभावितमंभोजं, जर्जरेतरसौरभम् । प्राभृतीकारयामास, मेरुप्रभमहीपतेः ॥ ३५ ॥ त्रिभिर्विशेषकं ॥ तामादाय गुरोः भर्त्ता, स्वसमीपे

२० तीर्थपदे मेरुप्रभकथा

निषेदुपः । यौवराज्यपतो भ्रातुः, कंठे प्रथग्वतो न्यधात् ॥ ३६ ॥ तद्योगान्मूर्छया सोऽपि, पपात पृथिवीतले । तत्रा-
गतस्ततः सर्वोऽप्यरोदीत्तत्परिच्छदः ॥ ३७ ॥ तत्स्वरूपं परिज्ञाय, राजा स्वाजन्यमोहतः । तद्दुःखप्रतिबिंबेन, दुःखि-
तात्माऽभवद्भृशम् ॥ ३८ ॥ विद्याविद्भिस्ततो वैद्यैः, सज्जीचक्रे नृपानुजः । उल्लासोत्सवैः साकं, नृपानंदेन सर्वतः ॥३९॥
मालाकाराननाद् ज्ञात्वा, तन्मातुश्चेष्टितं क्रमात् । शक्रवद्विक्रमाढ्योऽपि, न विरूपमहो न्यधात् ॥ ४१ ॥ दीयमानं तदा
राज्यं, मयेदं तव सूनवे । नादायि हेतुना केनाधुना तु स्थितिरीदृशी ? ॥ ४२ ॥ तस्या दत्त्वेत्युपालंभं, शुभंयुर्जगती-
पतिः । विवेकविकसत्स्वांतः, संवेगामृतसागरः ॥ ४३ ॥ अनुजे निजसाम्राज्यं, महासेने निधाय च । शिश्रायाभय-
घोषस्य, संयमं सन्निधौ गुरोः ॥ ४४ ॥ चतुर्भिः कलापकं ॥ अधीतद्वादशांगोऽसौ, क्रमेण गुरुणा मुनिः । स्वपदे
स्थापितो जज्ञे, जिनशासनभानुमान् ॥ ४५ ॥ ग्रामानुग्राममातन्वन् , विहारं स मुनीश्वरः । चित्रकूटं पुरं प्रापत् ,
पृथिव्यामेकलोचनम् ॥ ४६ ॥ तत्र प्राच्यां पुरद्वारे, यक्षवेश्मनि संस्थितः । धर्मं दिदेश पीयूषमुचा वाचा पुरांगिनाम्
॥ ४७ ॥ निशम्य देशनां तस्य , सद्गुरोरमृतस्रवाम् । प्रत्यक्षीभूय यक्षोऽपि, सम्यक्त्वं प्रत्यपद्यत ॥ ५९ ॥ विश्वा-
ह्लादकरं नाट्यविधिं विविधभंगिभिः । ततः प्रीतमना नाकी, पुरस्तस्य विनिर्ममे ॥ ५० ॥ जितारिस्तत्पुरस्वामी, श्रुत्वा
तद्भुवनाद्भुतम् । तत्रागत्यावृतः पौरैर्भक्तितस्तं नमोऽकरोत् ॥ ५१ ॥ नाकिना निर्मिते तेनासीनः कनकनीरजे ।
सोऽपि तेषां विबोधाय, देशनां विदधे यथा ॥ ५२ ॥ दुर्गः संसारमार्गो मरणमनियतं व्याधयो दुर्निवार्या, दुष्प्रापा
कर्मभूमिर्न खलु नियततास्ति हस्तावलंबः । इत्येवं संप्रधार्य प्रतिदिवसनिशं मानसे शुद्धबुद्ध्या, धर्मे चित्तं निधेयं नि-

यतमतिगुणं वांछता मोक्षसौख्यम् ॥ ५३ ॥ स सर्वदेशभेदाभ्यां, द्विविधोऽभिदधे जिनैः । आगारिणां भवेदाद्यो, द्वितीयस्त्वनगारिणाम् ॥ ५४ ॥ श्रुत्वेति देशनां तेषां, प्रबुद्धः पृथिवीपतिः । अग्रहीदार्हतं धर्मं, द्वादशव्रतभूषितम् ॥५५॥ बोधिबीजप्ररोहैकहेतुर्मिथ्यादृशामपि । जिनेंद्रशासनस्योच्चैरासीद्विश्वे प्रभावना ॥ ५६ ॥ स सूरिः समवासार्षीत् , ततो वेलापुरे पुरे । प्रबोधयन् प्रतिग्रामं, भव्यजंतूननेकशः ॥ ५७ ॥ उपदेशैः सुधादेश्यैस्तत्र संतोष्य सूरिराट् । लक्ष्मीदेवीं व्यधाच्छुद्धसम्यग्दर्शननिर्मलाम् ॥ ५८ ॥ रत्नवृष्टिस्तदा चक्रे, पुरस्तस्य मुनीशितुः । सर्वज्ञशासनौन्नत्यहेतवे प्रीतया तया ॥ ५९ ॥ श्रियाऽर्पितैस्तदा रत्नैः, श्राद्धश्रेणिगृहावली । सत्यं रत्नवतीनाम, बभार यत सर्वतः ॥ ६० ॥ श्रुत्वाऽरिदमनो भूमान् , तत्प्रभावमहोदयम् । तत्रागत्य नमश्चक्रे, तं गुरुं गुरुभावतः ॥ ६१ ॥ गुरुणा देशना चक्रे, पुरस्तस्य सुधासवा । हेर्पांभोजे श्रिया दत्ते, निवद्धयाद्भुतसौरभे ॥ ६२ ॥ यथा—श्रद्धांभोजनिताऽत्र चित्तविपिने सम्यक्त्वमूला व्रतश्रेणीकदलिताऽन्विता समरसोल्लासेन पूर्णांतरा । लोकाचारतहिस्त्वचा सह बुधैः पत्रादि हत्वाऽऽदिमैर्भुक्ता धर्ममयीक्षुयष्टिरसुकौ संसारतापच्छिदे ॥ ६३ ॥ इत्यास्वाद्य गुरोर्धर्मदेशनाममृतोपमाम् । राजा सद्दर्शनोपेतामाददे द्वादशव्रतीम् ॥ ६४ ॥ तस्मिन् कवीश्वरश्रेणीं, प्रमाणनयतत्त्ववित् । दृष्टिवादप्रकाशेन , स गुरुः प्रत्यबोधयत् ॥ ६५ ॥ ततोऽतिमहती जैनमतस्यासीत्प्रभावना । मेरुप्रभमुनींद्रस्य, सर्पं सौंदर्यसंपदा ॥ ६६ ॥ महिमाब्धिस्ततः सूरिः , प्रतिष्ठानपुरे पुरे । आयासीत्साधुभिः सार्कं, व्रजन्नामपरीतितः ॥ ६७ ॥ महाकवितया ख्यातिस्तत्रासीन्नगरेऽखिले । गुणिनो मुनिराजस्य, चित्रपात्रे मनस्विनाम् ॥ ६८ ॥ निर्मलध्वजनामाथ, तत्र वादीश्वराग्रणीः । अवादीन्नृपतिं विद्यागर्वग-

विंशाति-

स्थान०

॥९२॥

वैंकपर्वतः ॥ ६९ ॥ भारतीभवने गत्वा, समक्षं विदुषां मया । जैनाचार्यैः समं वादः, कार्यो मेरुप्रभाह्वयैः ॥ ७० ॥ तेषामाह्वानमाधाय, ततोऽसौ मदमेदुरः । वाग्देवीवेश्मनि प्रापद्वादाडंबरपूर्वकम् ॥ ७१ ॥ सूरयोऽपि नृपाहूतास्तत्रायाता मदोज्झिताः । आर्हतैः कलिता मंत्रिश्रेष्ठिसामंतनागरैः ॥ ७२ ॥ भगवंतं तमालोक्य, लोकंपृणगुणाकरम् । स्ववेश्मनि समायांतं, नृदेवामरवंदितम् ॥ ७३ ॥ भारती सहसोत्थाय, भक्तिरागेण भूयसा । नमस्कृत्य पुरस्कृत्य, हेमपद्मे न्यवेशयत् ॥ ७४ ॥ माहात्म्यं तादृशं वीक्ष्य, गुरोस्तस्य महात्मनः । वादींद्रोऽजनि निःपृष्ठ्न्याकरणः क्षणादपि ॥ ७५ ॥ मिथ्यात्वमोहनीयस्यापगमात्कर्मणस्ततः । वादींद्रः प्राप्य सम्यक्त्वं, तस्यांते व्रतमाददे ॥ ७६ ॥ महेंद्रोऽप्यार्हतीभावं, भेजे सम्यक्त्वभावितः । भारत्याऽपि पुनर्लेभे, सद्दृष्टिर्विप्रोत्तमा ॥ ७७ ॥ शासनस्योन्नतिर्भूमौ, बभूव जगदीशितुः । उल्लास मुनीशस्य, कीर्त्तिः कार्त्तिकसोमरुक् ॥ ७८ ॥ निष्पापवृत्तयः प्रापुस्ततस्ते पाटलीपुरे । कुबेराख्यो धनी तत्र, तद्गिरा श्रावकोऽजनि ॥ ७९ ॥ यशोवर्मनरेंद्रस्य, तस्य दर्शनतो ययौ । तृतीयस्तु महाघोरो, ज्वरस्तत्क्षणमात्रतः ॥८०॥ श्राद्धधर्मं समासाद्य, विशुद्धं गुरुसन्निधौ । यशोवर्माऽभवद्राजा, ततः प्रौढप्रभावकः ॥ ८१ ॥ अथ मेरुप्रभः सूरिः, प्राप्तो गोगपुरे पुरे । चतुर्धाभिऽग्रहं चक्रे, चतुर्मासीमुपोषितः ॥ ८२ ॥ द्रव्यतो मोदकप्राप्तिः, क्षेत्रतोऽत्र पुरे यदा । कालतोऽत्र चतुर्मास्यामशेषायामपि ध्रुवम् ॥ ८३ ॥ भावतो हि भवेद्दाता, गोचराग्रं गतस्य मे । पट्टहस्ती नरेंद्रस्य, स्वयमेव मदोल्वणः ॥ ८४ ॥ तदाऽहं तपसः पूर्त्तिं, विधास्ये नान्यथा पुनः । न घोरकर्मणो मुक्तिर्यतस्तीव्रतपो विना ॥ ८५ ॥

२० तीर्थ
पदे मेरु
प्रभकथा

त्रिभिर्विशेषकं ॥ तपोऽतिदुष्करं तेषामित्यग्रहपूर्वकम् । द्विमासी कुर्वतां जाता, गताश्चिमनसां ततः ॥ ८६ ॥ क्षयोपशमः
तस्तेषामंतरायस्य कर्मणः । आलानस्तंभमुन्मूल्य, राजहस्ती मदोद्धुरः ॥ ८७ ॥ विशालस्थालमादाय, स्थूलमोदकपूरि-
तम् । पश्यत्सु पौरलोकेषु, स्तोकेतरशुभोदयात् ॥ ८८ ॥ददौ दयालुहृदयो, भिक्षां दक्षाग्रणीस्तदा । तरवोऽपि प्रयच्छं-
ति, यत्फलं सुकृतोदयात् ॥ ८९ ॥ त्रिभिर्विशेषकम् । पंचाश्चर्यं सुरैश्चक्रे, तत्रानंदवशंवदैः । पदे पदे स्फुरद्रत्नश्रेणिवृ-
ष्ट्या मनोहरम् ॥ ९० ॥ मिथ्यादृशोऽपि केऽप्यापुर्बोधिरत्नं सुदुर्लभम् । अर्हन्मतोन्नतिश्चासीत्तत्र सर्वातिशायिनी ॥९१॥
ततस्ते मथुरां प्रापुर्व्रजंतो विधिवत्क्रमात् । तत्र हेमध्वजो राजा, प्रशास्ति निखिलाः प्रजाः ॥ ९२ ॥ स बौद्धमतरक्तात्मा, नार्हतं
मन्यते मतम् । तद्दाक्षिण्याज्जनाः सर्वे, प्रायः सौगतदृष्टयः ॥९३॥ न ते यच्छंति साधूनामन्नपानानि कर्हिचित् । गुणेष्वसूयां कुर्वाणा,
जल्पंत्येवं मुनीन् प्रति ॥ ९४ ॥ सौगता गुरवोऽस्माकं, गरीयोमाहिमाद्भुताः । भिक्षां दद्मस्ततो नैव, जैनानामनगा-
रिणाम् ॥ ९५ ॥ ज्ञात्वैनद् गुरुभिर्विद्याप्रभावात्स्तंभितास्तदा । सौगताः पदमप्येकं, वक्तुं गंतुं न च क्षमाः ॥ ९६ ॥
तत्प्रेरिता नरेंद्रस्य, चतुरंगचमूः पुनः । आगच्छंती गुरून् हंतुं, स्तंभिता त्रिदशोत्तमैः ॥ ९७ ॥ नभोवाणी तदेत्यासी-
द्यदि वो जीवितस्पृहा । तदानीं सद्गुरोरस्य, भजध्वं पदपंकजम् ॥ ९८ ॥ ततोऽजनि महीपालः, श्रावकः सौगतैः
समम् । समग्रांगिकृपारूपं, प्राप्य धर्मं शिवावहम् ॥ ९९ ॥ मुनीनामन्नपानादिप्राप्तिरासीद् गृहे गृहे । शासनस्योन्नतिस्त-
स्मिन्, पुरेऽभूत्सर्वतोमुखी ॥ १०० ॥ प्रापन्मेरुप्रभसूरिर्हस्तिनागपुरं ततः । तत्र हैमं नभःपद्मं, त्रिदशैर्विदधे महत् ॥१॥
निविष्टोऽसौ ततस्तत्र, साधुश्रेणिसमन्वितः । धर्मं दिदेश पौरेभ्यः, सुधासोदरया गिरा ॥ २ ॥ तदाकर्ण्य पतिः पृथ्व्याः,

विस्मयस्मेरमानसः । ववंदे तं गुरुं भक्त्या, तत्रागत्य कृतोत्सवम् ॥ ३ ॥ नृपातिर्देशनां श्रुत्वा, गुरोस्तस्य गरीयसीम्। सम्यक्त्वं प्रतिपद्याथ, चक्रे धर्मप्रभावनाम् ॥ ४ ॥ म्लेच्छसैन्यं समायातमन्यदा तत्र दुर्जयम् । कल्पांतानलवद्रौद्रं, दृष्ट्वा राजा जगौ गुरुम् ॥ ५ ॥ प्रभो ! कृपाप्रपामाय!, मम साम्राज्यसंपदः । सांप्रतं गमयिष्यंति, संहारं प्रजया समम् । ॥ ६ ॥ सूरिः स्माह ततो राजन् !, जयः पुण्यवतां ध्रुवम् । भावीति मा भयं कार्षीः, कुरु धर्मं विशेषतः ॥७॥ एवंवादिनि सूरींद्रे, राजानं पुण्यशालिनम् । चरा वर्द्धापयामासुः, सानंदा रचितांजलि ॥ ८ ॥ म्लेच्छसैन्याग्रणीः स्वामिन् !, रजन्यां मृतिमाप्तवान् । यावनी जवतः सेना, ततः पश्चात्पलायिता ॥ ९ ॥ तत् श्रुत्वा नृपतिः प्रीतः, प्रणम्य श्रीगुरूत्तमम् । वर्द्धापनं पुरेऽकार्षीज्जिनधर्मोन्नतिप्रदम् ॥ १० ॥ ततो भोगपुरे सूरिर्भूरिमाहात्म्यपूरितः। आयासीद्विश्वविस्तीर्थं, भास्वानिव प्रकाशयन् ॥ ११ ॥ आद्यस्वर्गपतिस्तत्रागत्य नत्वा च तं गुरुम् । निर्मायं निर्ममे भक्त्या, तद्गुणावलिसंस्तुतिम् ॥ १२ ॥ जिनेंद्रशासनोन्नत्यं, कुर्वन् सर्वांगिसौख्यभृत् । अयं तीर्थकरो भावी, गुरुः सुकृतसागरः ॥ १३ ॥ एतदंह्री नमस्कृत्य, जन्मकोटिकृतान्यपि । दुष्कृतानि विलीयंते, महावाताद्यथाम्बुदाः ॥ १४ ॥ इत्याख्याय स्वयं वज्री, पुरस्तान्मुनिसंततेः । तं प्रणम्य पदं प्राप, निजं जन्मफलं श्रयन् ॥ १५ ॥ सम्मेतशिखरं प्राप्य, विधायानशनं गुरुः । ब्रह्मलोके सुरो जज्ञे, क्रमेण द्युतिभासुरः ॥ १६ ॥ ततश्च्युतो जिनो भावी, मेरुप्रभमुनीश्वरः । विदेहे विहितानेकलोकास्तोकसुखोदयः ॥ १७ ॥ एवं जिनेश्वरमतोन्नतिप्रवुत्ता ये, कुर्वंति सर्वजनबोधिविधानहेतुं । ते तीर्थराजपदवीं कलयंति सम्यग्, हर्षप्रकर्षकलितां सततानुभावाम् ॥ १८ ॥ इति श्रीविंशतिस्थानकविचारामृतसंग्रहाख्ये

ग्रंथे श्रीतपागच्छेशश्रीजयचंद्रसूरिराजशिष्येण जिनहर्षगणिना निर्मिते विंशतिस्थानककथानकं संपूर्णम् ॥

अथ प्रशस्तिः—अर्हत्कर्मास्रवाणां यो, विंशतेरेकमप्यदः। पदमाराधयत्येवं, सम्यग्विधिपुरस्सरम् ॥ १ ॥ भूयसीर्व-र्गणाः क्लिष्टा, निरस्याशुभकर्मणाम्। प्राप्योच्चैःकुलगोत्रादि, स भवेत्त्रिजगद्गुरुः ॥ २ ॥ पुरा श्रीवज्रनाभेन, सार्वभौमेन भूभुजा द्वादशांगविदा सम्यक्, चारित्रोज्ज्वलचेतसा ॥ ३ ॥ कृतानि त्रिंशता भक्तत्यागैरेतान्यनंतरम्। तत्र पुण्यानुभा-वेन, सोऽभूदाद्यजिनेश्वरः ॥ ४ ॥ युग्मम्। श्रीवीरतीर्थनाथेन, प्राच्ये नंदनजन्मनि। संलग्नैः क्षपणैस्त्रिंशन्मितैरेकांतनिःस्पृहैः ॥ ५ ॥ अमूनि विंशतिस्थानकानि दुष्कर्मशांतये । विधिनाऽऽराधितान्यर्हद्ध्यानधौतांतरात्मना ॥ ६ ॥ ततो देवपदं प्राप्य, दशमे देवसद्मनि। ततश्च्युतो जगन्नेता, वर्द्धमानाभिधोऽजनि ॥ ७ ॥ त्रिभिर्विशेषकम् ॥ यतः—[1]पढमो तित्थयरत्तं वीसहिं ठाणेहिं कासीय ॥ इति ॥ पव्वज्ज पुट्टिले सयसहस्स सव्वत्थ मासभत्तेणं ॥ ८ ॥ इत्यादि, तद्विंशतिस्थानाधिकारसंग्रहो यथा—तत्रैकमर्हदर्चाणां, विधानेन च पूजया । अवर्णवादव्यापेधैः, सद्भूतार्थस्तवैरपि ॥ १ ॥ सिद्धानां सिद्धिस्थानेषु, प्रतिजागरणोत्सवैः। यथावस्थितसिद्धत्वकीर्त्तनाच्च द्वितीयकम् ॥ २ ॥ बालग्लानशैक्षादीनां, यतीनां यस्त्वनुग्रहः। प्रवचनस्य वात्सल्यं, स्थानकं तत्तृतीयकम् ॥ ३ ॥ आहारौषधवस्त्रादिदानादंजलियोजनात् । गुरूणामपि वात्सल्यकरणं तु तुरीयकम् ॥ ४ ॥ विंशत्यब्दपर्यायाणां, षष्टिवर्षायुषां तथा। समवायभृतां भक्तिः, स्थविराणां तु पंचमम् ॥ ५ ॥ अथ व्यपेक्षया स्वस्माद्बहुश्रुतभृतां सदा । अन्नवस्त्रादिदानेन, षष्ठे वात्सल्यनिर्मितिः ॥ ६ ॥ सुविकृष्टतपःकर्मनिर्माणानां तपस्विनाम् । भक्तिविश्रामणादानैर्वात्सल्यमि [illegible] सप्तमम् ॥ ७ ॥ द्वादशांगे श्रुते प्रश्नवाचना-

[1] प्रथमः [ जिनः ] तीर्थकरत्वं विंशत्या स्थानकैरकार्षीत्। प्रव्रज्यापोट्टिले ( भवे ) शतसहस्रं यावत् सर्वत्र मासक्षपणैः ॥

दिभिरन्वहम् । सूत्रार्थोभयगो ज्ञानोपयोगो यस्तदष्टमम् ॥ ८ ॥ शंकादिदोषरहितं, स्थैर्यादिगुणभूषितम् । शमादिलक्षणं सम्यग्दर्शनं नवमं पुनः ॥९॥ ज्ञानदर्शनचारित्रोपचारैश्च चतुर्विधैः । कर्मणां विनयनतो, विनयो दशमं पुनः ॥१०॥ इच्छामिथ्याकरणादियोगेष्वावश्यकेष्वलम्।अनीचारपरिहारो,यत्तदेकादशं तु तत् ॥११॥ अहिंसादिसमित्यादिमूलोत्तरगुणेषु या। प्रवृत्तिर्निरतीचारा, स्थानकं द्वादशं तु तत् ॥ १२ ॥ शुभध्यानस्य करणं, क्षणे क्षणे लवे लवे । प्रमादपरिहारेण, स्थानमेतत्त्रयोदशम् ॥ १३ ॥ अनाबाधेन मनसो, वपुषश्च निरंतरम् । यथाशक्ति तपःकर्म, स्थानमेतच्चतुर्दशम् ॥ १४ ॥ अन्नादीनां संविभागो, यथाशक्ति तपस्विषु । मनोवाक्कायशुध्ध्या यः , स्थानं पंचदशं हि तत् ॥ १५ ॥ आचार्यादीनां भक्तितो, भक्तपानासनादिभिः । वैयावृत्त्यस्य करणं, स्थानकं षोडशं तु तत् ॥ १६ ॥ चतुर्विधस्य संघस्य, सर्वापायनिषेधनात्। मनःसमाधिजननं, स्थानं सप्तदशं हि तत् ॥ १७ ॥ सूत्रस्यार्थस्योभयस्याप्यपूर्वस्य प्रयत्नतः । अन्वहं यदुपादानं, स्थानमष्टादशं हि तत् ॥ १८ ॥ श्रद्धानेनोद्भासनेनाऽवर्णवादच्छिदादिना । श्रुतज्ञानस्य भक्तिस्तत् , स्थानमेकोनविंशकम् ॥१९॥ विद्यानिमित्तकवितावादधर्मकथादिभिः । प्रभावना शासनस्य , तद्विंशतितमं पुनः ॥ २० ॥ इत्याश्रवा जिनवरेंद्रपदोदयस्य, कुर्वंति विंशतिमिता अमितानुभावाः । चेतांसि दर्शितनिदर्शनसत्फलाश्च, श्रीतीर्थनाथपदवीसुखसस्पृहाणि ॥ १ ॥ विमोहमूढेन मया यदुक्तमर्हद्वचोऽतीतमिह प्रमादात् । मयि प्रसादं कृपणे विधाय, तत् शोधनीयं कृपया महद्भिः ॥ २ ॥ योऽर्हत्पदानंदविधायिपुण्यप्रकाशकं ग्रंथममुं शृणोति । सोऽभीप्सितानेकसमृद्धिशाली, श्रयेत्पदं शाश्वतहर्षसौख्यम् ॥ ३ ॥

तपोगच्छेऽभवन्नूम्ना, महिम्ना विश्वविश्रुतः । जगच्चंद्रगुरुः श्रीमान् , सम्यग्ज्ञानक्रियानिधिः ॥ ४ ॥ श्रीदेवेंद्रगुरु-

स्तस्य, पट्टेऽभूत्प्रकटप्रभः। यद्देशनासमाजेऽभूद्वस्तुपालः सभापतिः ॥ ५ ॥ तच्छिष्याः क्षितिविख्याता, विद्यानंदमुनीश्वराः। अजायंत जगत्पूज्या, व्यायोदेशनक्रियागुणैः ॥ ६ ॥ तत्पट्टोदयभास्वानासीन्निःसीमतेजसां राशिः। श्रीधर्मघोषगणभृद् सचक्रानंदिगुणविभवः ॥ ७ ॥ ततश्च—श्रीसोमप्रभ इत्यासीत्सूरिः सीमा महात्मनाम्। व्यधाद्द्योतमवद्यारिशासनं यो युगोत्तमः ॥ ८ ॥ ततः शतक्रतुस्तुत्यः, श्रीसोमतिलकाह्वयः। सूरिर्भूरियशा जज्ञे, विज्ञेषु प्रथितो धुरि ॥ ९ ॥ श्रीदेवसुंदरगुरुर्गरिमागुरुशीर्विनिःसितारिरभवद्भुवनातिशायी। तत्पट्टपंकजरविः पविपाणितेजा, भूजानिवंदितपदः शिवमार्गदर्शी ॥ १० ॥ सूरियुगोत्तमसमोऽजनि तस्य पट्टे, श्रीसोमसुंदरगुरुर्गुरुभाग्यशाली। यं श्रीसुधर्मगुरुणा गणभृत्पुरोगं, सर्वांगिचंगिमगुणैस्तुलयंति संतः ॥ ११ ॥ तच्छिष्यः प्रथमः समर्थमहिमा त्रैविद्यगोष्ठीगुरुः, सूरिः श्रीमुनिसुंदरः सुरगुरुख्यातिः क्षितौ प्रज्ञया। अस्ति प्रास्ततमोभरस्तदपरः सूरिस्तु भूरिप्रभाशाली श्रीजयचंद्र इत्यभिधया सर्वत्र लब्धोदयः ॥ १२ ॥ यो विश्वाद्भुतलब्धिभिः सुमनसामाश्चर्यकृद्भिः कलौ, सौभाग्यांबुधिरासाद पदवीं श्रीगौतमस्वामिनः। स श्रीमद्गुरुसोमसुंदरपदांभोजाकरार्हपतिर्जीयात् श्रीजयचंद्रसूरिरवनौ सूरीश्वरग्रामणीः ॥ १३ ॥ विंशतिस्थानकाचारविचारामृतसंग्रहः। गच्छेशश्रीजयचंद्रसूरिशिष्येण निर्मितः ॥ १४ ॥ वीरमाख्यपुरे रम्ये, युग्मव्योमेंदुपंचभिः [ १५०२ ]। प्रमिते वत्सरे हर्षाज्जिनहर्षेण साधुना ॥ १५ ॥ ग्रंथस्यास्य पवित्रस्य, वाचनश्रवणादिभिः। लभंते प्राणिनः प्रौढां, श्रीजिनेश्वरसंपदम् ॥ १६ ॥ ग्रंथोऽष्टाविंशतिशतानुमितः सर्वसंख्यया। जीयादयं बुधश्रेणीवाच्यमानो निरंतरम् ॥ १७ ॥ यस्मिन् दृक्पथमागतेऽपि सहसा नश्यंति विश्वार्त्तयो, लेभे सर्वजनातिशायिविभवा येनोपमा गौतमी। जीयात् श्रीगुरुसोमसुंदरप-

दर्षोनेकमानूरग:, स श्रीमान् जयचंद्रसूरिभगवान् पूज्यस्त्रिलोकीतले ॥ १८ ॥ भुजगगनतिथिमितेऽब्दे नानाग्रंथार्थसारमादाय। श्रीमज्जिनेंद्रपदवीपुण्यालोकाय लोकानाम् ॥ १९ ॥ गच्छाधिपश्रीजयचंद्रसूरिशिष्याग्रणीरार्हतभक्तिशाली । श्रीविंशतिस्थानतपोविचारग्रंथं व्यधाच्छ्रीजिनहर्षनामा ॥ २० ॥

एतदाकर्णनात्पापः, प्राणिनां दुष्कृतालयः । क्षीयंते तत्क्षणादेव, सम्यग्दर्शनशालिनाम् ॥ २१ ॥ वाच्यमानो बुधैः सम्यग्, ग्रंथोऽयं सुकृताकरः । यावद्वीरविभोस्तीर्थं, तावन्नंदतु नंदति ॥ २२ ॥ इति श्रीविंशतिस्थानविचारामृतसंग्रहः संपूर्णः ।

इति श्रेष्ठिदेवचन्द लालभाइ जैनपुस्तकोद्धारे
श्रीविंशतिस्थानविचारामृतसंग्रहः समाप्तः
ग्रन्थाङ्कः



२०तीर्थं
पदेमेरु
प्रभकथा